गोणिका - २०१८-१९

Vol. - VI

Vol. - VI

ISBN - 2347 - 629X

वाग् वै ब्रह्म

# गोणिका

(व्याकरणशास्त्रीयवार्षिकशोधपत्रिका)

शिक्षासत्रम् - २०१८-१९

संरक्षकः

**प्रो. हरेकृष्णमहापात्रः**

प्राचार्यः

प्रधानसम्पादकः

**प्रो.के.वी.सोमयाजुलुः**

विभागाध्यक्षः

नव्यव्यकरणविभागः

**राष्ट्रियसंस्कृतसंस्थानम्** (मानितविश्वविद्यालयः)

(राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदा "ए" श्रेण्यां प्रत्यायितम्)

श्रीसदाशिवपरिसरः, पुरी, ओडिशा

वाग् वै ब्रह्म

# गोणिका

व्याकरणशास्त्रीयवार्षिकशोधपत्रिका

संज्ञासूत्रविशेषाङ्कः

शिक्षासत्रम् - २०१८-१९

❖


**संरक्षकः**

**प्रो. हरेकृष्णमहापात्रः**

प्राचार्यः

❖

**प्रधानसम्पादकः**

**प्रो.के.वी.सोमयाजुलुः**

विभागाध्यक्षः

❖

**सम्पादकाः**

**प्रो.अनुपमापृष्टिः**

**डॉ.दुर्गाचरणषडङ्गी**

**डॉ.उमेशचन्द्रमिश्रः**

**डॉ.अजयकुमारदाशः**

**श्री अजयानन्दसाहुः**



**नव्यव्याकरणविभागः**

**राष्ट्रियसंस्कृतसंस्थानम्** (मानितविश्वविद्यालयः)

(राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदा 'ए' श्रेण्यां प्रत्यायितम्)

**श्रीसदाशिवपरिसरः, पुरी, ओडिशा**

# गोणिका (GONIKA)

**प्रकाशकः -** नव्यव्याकरणविभागः
श्रीसदाशिवपरिसरः, पुरी (ओडिशा)

**वर्षम् -** २०१९



**ISSN - 2347-629X**

**Vol.- VI**

**Email - gonika2013@gmail.com**

**संस्करणम् -** २०१९

**प्रतयः -** ३००

**अक्षरसंयोजनम् -** **डॉ.अजयकुमारदाशः**
**श्रीअजयानन्दसाहुः**

**मुद्रकः -** **सारथिप्रिण्टर्स्**
**मोचिसाहि, पुरी - १**

**मूल्यम् -** २००/-

**प्रो. पी.एन्. शास्त्री**
कुलपति
राष्ट्रिय संस्कृत संस्थान (मानित विश्वविद्यालय)
(मानव संसाधन विकास मंत्रालय, भारत सरकार के अधिन)
('ए' ग्रेड के साथ राष्ट्रीय मूल्यांकन एवं
प्रत्यायन परिषद् द्वारा मान्यता प्राप्त)

**Prof. P.N. Shastry**
Vice-Chancellor
RASHTRIYA SANSKRIT SANSTHAN
Deemed to be University
(Under MHRD, Govt. of India)
Accredited by NAAC with 'A' Grade

RSKS/VC/MSG/2018-19/38 29.05.2018

## पञ्चषाः शब्दाः

अध्ययनं लेखनञ्च शास्त्रपरम्परासंरक्षणस्य मार्गद्वयं वरीवर्त्ति। तत्र छायाणामध्ययनसरणीं प्रवर्तीयतुकामाः आचार्याः अध्यापनेन सहैव परीक्षणविधिमपि समायोजयन्ति। एवमेव लेखनपाटवं संबर्धयितुं सङ्गोष्ठीसञ्चालनेन समं पत्रिकाप्रकाशनमपि प्रकल्पयन्ति तद्विदः। एतस्यामेव समेधमानायां धारायां राष्ट्रियसंस्कृतसंस्थानस्य श्रीसदाशिवपरिसरस्य नव्यव्याकरणविभागे '**गोणिका**'नाम्नीं वार्षिकीं शोधपत्रिकां प्रकाश्यं नयतीति संश्रुत्य मोमुदीति मे मनः ।

भगवतो गोणिकापुत्रस्य भाष्यकारस्य संस्मरणेन प्रकाशितैषा गोणिका छात्राणां विदुषाञ्च प्रबन्धसुमनांसि समाचिन्वति विपश्चितां चेतश्चमत्कृतिं सञ्चरयन्ती परिसरस्य प्रतिभाविशेषं विस्तारयन्ती अगणितगुणिगणमनांसि समाह्लादयन्ती संराजतामिति मम शुभाशंसाः।

इति
विदुषामाश्रवः
प नाशास्त्री
प्रो. परमेश्वरनारायणशास्त्री

**प्रो. एम्. सुब्रह्मण्य शर्मा**
कुलसचीव (प्र.)
राष्ट्रिय संस्कृत संस्थान
(मानित विश्वविद्यालय)
(मानव संसाधन विकास मंत्रालय, भारत सरकार के अधिन)
('ए' ग्रेड के साथ राष्ट्रीय मूल्यांकन एवं
प्रत्यायन परिषद् द्वारा मान्यता प्राप्त)

**Prof. S. Subrahmanya Sarma**
Registrar (I/c)
RASHTRIYA SANSKRIT SANSTHAN
Deemed to be University
(Under MHRD, Govt. of India)
(Accredited by NAAC with 'A' Grade)

## मङ्गलं भूरि भूयात्

लौकिका: बुभुत्सितं श्रोतृपुरुषानवगतमर्थं बोधयितुमिच्छन्तो वाक्यं प्रयुज्यतेजिज्ञासितास्तु प्रमेयं वाक्यं पृच्छन्ति। वाक्यं तु शब्दसमूह:। शब्दद्वारैव लोकयात्रा प्रवर्तते। अत एव शब्द: सर्वार्थप्रकाशकं ज्योति: इत्याह दण्डी-

**इदमन्धतम: कृत्स्न: जायेन भुवनत्रयम् ।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ।।**

शब्दसाधुत्वबोधिका व्याकरणविद्या सर्वशास्त्राणां मूलभूतत्वेन प्रथमाना चकास्ति। अत एव आचार्यो भर्तृहरि: ''पवित्रं सर्वविद्यानाम् अधिविद्यं प्रकाशते'' इति निगदन् व्याकरणविद्याया: सर्वशास्त्रमूलभूतत्वं प्रतिष्ठापयति। अपि च अर्थप्रवृत्तितत्त्वनिबन्धनानां शब्दानां स्वरूपबोधनेन व्याकरणशास्त्रस्य व्यावहारिकपक्षमपि न कश्चित् निराकर्तुम् उत्सहेत्। राष्ट्रियसंस्कृतसंस्थानस्य श्रीसदाशिवपरिसरस्य नव्यव्याकरणविभाग: व्याकरणशास्त्रीयतत्त्वानि विशदयितुं छात्रविद्वत्समालोचकप्रबन्धकदम्बं बिभ्राणां ''गोणिका'' नाम्नी शोधपत्रिकां लोचनगोचरतां नयतीति समाकर्ण्य नितरां प्रहृष्यति मे स्वान्त:। व्याकरणशास्त्रीयविविधनिबन्धसंचयान् समाकलयन्ती ''गोणिकां'' पत्रिकेयम् अन्तर्वाणिमानसनभोमण्डलं समलंकुरुतात् इति आशासे।

यौष्माक:

प्रो. एस्. सुब्राह्मण्य शर्मा

# प्राचार्यवाक्



''मानाधीना मेयसिद्धि:'' इत्यभियुक्तोक्ते: प्रमाणप्रयोजनं सर्वातिशायि वर्तते। तत्र च प्रमाणपदवाच्येषु प्रत्यक्षादिषु शब्दप्रमाणस्य स्थानं सर्वोत्कृष्टं वरीवर्त्ति। अत एव भगवान् महाभाष्यकार: - ''**शब्दप्रमाणका: वयम् । यच्छब्द आह तदस्माकं प्रमाणम्**'' इति निगदन् शब्दप्रमाणं विशिनष्टि। अत्र शब्दपदेन मुख्यत: शास्त्रावयवीभूत: शब्दसमुदाय एव ग्राह्य:। तत्तच्छास्त्रञ्च वेदमेवोपजीव्यानुशासनकर्तृत्वं दधाति। तदुक्तमाचार्येण भर्तृहरिणा -

**''स्मृतयो बहुरूपाश्च दृष्टादृष्टप्रयोजना:।**
**तमेवाश्रित्य लिङ्गेभ्यो वेदविद्भि: प्रकल्पिता:।।''**

(वाक्यपदीयम् १/७)

तेषु च शास्त्रसञ्चयेषु सकलस्यापि शास्त्रस्य प्रयोजनवत्त्वभिगमेऽपि तत्र शब्दानुशासनापरपर्यायस्य व्याकरणशास्त्रस्य प्रयोजनं निर्विवादं सर्वोपकारकञ्च । व्याकरणमेव वाचस्संस्कारेण मनीषिणं सुसंस्कृतं सम्पादयत्तं विभूषितं विधत्ते। अत: कविकुलगुरु: कालिदास: पार्वत्या: जननेन हिमालयस्य शोभां वर्णयितुकामो मालोपमया तां व्यक्तरकुर्वन् चरमेणोपमानेनेदमेव संस्मारयति। तथाहि -

**''प्रभामहत्या शिखयेव दीप:**
**त्रिमार्गयेव त्रिदिवस्य मार्ग: ।।**
**संस्कारवत्येव गिरा मनीषी**
**तया स पूतश्च विभूषितश्च ।।''** (कुमारसम्भवम्-१)

अत एव वाक्यपदीयकार: -

**''तद्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्।**
**पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते ।।''** (वाक्यपदायम्- १/१४)

इति ब्रुवाणो व्याकरणस्य सर्वविद्यवरीयस्त्वं विशदयति। किञ्च व्याकरणज्ञानेन भाषापाटवं सम्प्राप्य यथा जनो व्यवहारनैपुण्यं लभते तथैव शास्त्रान्तरप्रवेशार्थं वैशद्यमपि समासादयति। अत: सिद्धिसोपानपर्वणामाद्यपदस्थानत्वेन व्याकरणस्य निर्देशस्संगच्छते। अत: अस्यामेव परम्परायां शब्दशास्त्रस्य प्रवहन्तीं महतीं प्रतिष्ठां संस्थापयिष्यनस्मत्परिसरस्य व्याकरणोविभागो ''**गोणिका**'' नाम्नीं गुणिगणगणनीयां पत्रिकां परिप्रकाशयति। एषा पत्रिका छात्राणां लेखप्रकाशनेन यथा तां समुत्साहयति तथैव विद्वद्वरिष्ठानां प्रबन्धोपस्थापनेन तेषां शेमुषीमपि विशेषयति। तस्माद् भगवतो नीलाद्रीशस्य परमानुकम्पया गोणिकेयं द्युमणिरिव सर्वत्र परिगण्यतामित्यशासनो विरमत्येष जन: ।

(प्रो. हरेकृष्णमहापात्र:)
महापात्रः
प्राचार्य:

# सम्पादकीयम्



शब्दब्रह्मणि निष्णातः परब्रह्माधिगच्छतीत्याचार्यवचनं उद्बोधयति यच्छब्दज्ञानमन्तरा परब्रह्मणि सायुज्यं न । शब्दज्ञानं व्याकरणज्ञानाधीनम् । अतः कैयटः प्रत्यपादयत् ''अर्थपरिज्ञानफला हि वाक्। सम्यक् ज्ञानं हि प्रकाशनमर्थस्य। अर्थो हि वाचः शरीरम्'' इति कैयटः अर्थशरीरायाः वाचः आत्मत्वेन शब्दं निरदिशत्। आत्मरहितशरीरस्य जडत्वमिव शब्दतत्त्वं विना अर्थरूपः एष सर्वोऽपि दृश्यादृश्यप्रपञ्चः निस्सार एव इत्यस्ति तदभिप्रायः। तच्च शब्दतत्त्वमेकमखण्डमनन्तञ्च। तत् सर्वैः प्रतिदिनमुपयुज्यमानं गृह्यमाणं विचार्यमाणमपि समुद्र इव अविनाशि अक्षीणं नित्यनवनवायमानं चास्ति । तदुक्तम् -

**''वाग्वै समुद्रो न वै वाक् क्षीयते समुद्रः।।''** (ऐ.५/१६)

**''वाग्वै विराट्।''** (शत.३/५/१/३४)

**''वाग्वै सम्राट् परमं ब्रह्म।''** (बृ.उ.४/१)

समग्रस्यापि विश्वस्य वागेव शक्तिरिति उपनिषदः प्राहुः। विद्युतः विद्योतमं वायोः वानं मेघस्य वर्षणं च सर्वमपि वाक्शक्त्यैव क्रोडीकृतमिति तासामनुशंसनम् ।

**यद् विद्योतते यद् विधुनुते तत् स्तनयति ।**

**यन्मेहति तद् वर्षति वागेवास्य वाक् ।।** (बृहदा.उप. १/१)

अतः तेनैव पथा प्रचरन्तः शाब्दिका अपि -

**शब्देष्वेवाश्रिता शक्तिः विश्वस्यास्य निबन्धिनी ।**

**यन्नेत्रः प्रतिभाऽऽयं भेदरूपः प्रतीयते ।।** (वा.प.१/१११)

इति निगदन्तः शब्देष्वेव विश्वस्य निबन्धिनीं शक्तिमदर्शन् तेभ्यः तामचैषु तथोपदिक्षन् च । तच्च समुद्ररूपं परिव्यापकं वाक्तत्त्वमुपगन्तुं नेत्रमन्तर्मन एवेति साक्षात्कृतधर्माणामृषीणां संदिदिक्षा -

**''वाग्वै समुद्रो मनः समुद्रस्य चक्षुः।''** (ताण्ड्य.ब्रा. ६/६/७)

अविच्छिन्नमननापरपर्यायेण उपासनेन चोन्मीलति हृत्केदारे तदेव वाक्प्रसूनमिति तेषामाशयः। अतः परिसरस्य व्याकरणविभागीयविद्वांसः अन्तेवासिनश्च शब्दविद्यायां यथा श्रवणमनननिदिध्यासवः सम्पद्येरन् तदर्थं विभागीया वार्षिकपत्रिका ''**गोणिका**'' संज्ञाकारकविशेषाङ्करूपेण गुणवत्ती पुरतः आत्मनं प्रस्तोतुं समीहते। भगवतो गोणिकापुत्रस्य पतञ्जलेः परमानुकम्पया एषा गुणमयीगुणिगणस्वान्तः सन्तोषिणी च परिगण्यतमिति श्रीजगन्नाथं नाथमानो प्रेक्षावत्पथमाश्रये । इति।

विदुषां विधेयः

K.V. Somayajulu

प्रो. के.वी.सोमयाजुलुः)

विभागाध्यक्षः

# व्याकरणस्रष्टारः




सूत्रकारः भगवान् पाणिनिः




वार्तिककारः भगवान् कात्यायनः



महाभाष्यकारः भगवान् पतञ्जलिः

# विभागीयसदस्याः



**प्रो.हरेकृष्णमहापात्रः**

प्राचार्यः



**प्रो.के.वि.सोमयाजुलुः**

आचार्यःविभागमुख्यश्च



**प्रो.अनुपमापृष्टिः**

आचार्या



**डॉ.दुर्गाचिरणषड्ङ्गी**

सहायकााचार्यः



**डॉ.उमेशचन्द्रमिश्रः**

सहायकााचार्यः



**डॉ.अजयकुमारदाशः**

अतिथिप्राध्यापकः



**श्री अजयानन्दसाहुः**

अतिथिप्राध्यापकः

# विभागीयकार्यक्रमचित्राणि








# सूचीपत्रम्

# प्रौढमनोरमा-लघुशब्देन्दुशेखरग्रन्थद्वयोक्तदिशा हलन्त्यम् इति सूत्रार्थवर्णनप्रकारः

**कोङ्कुकुलावेङ्कटसोमयाजुलुः**

संस्कृतवाङ्मये विद्योतमाननिखिलसाधुशब्दानामन्वाख्यानायेन्द्रचन्द्रादिभिः प्रणीतेषु व्याकरणेषु मुनिना पाणिनिना प्रणीतं व्याकरणमन्यतमम्। इदञ्च व्याकरणं संस्कृतवाङ्मयस्थ निखिलवैदिकलौकिकसाधुशब्दानामवच्छेदकावच्छेदेन साधुत्वान्वाख्यानायेतरव्याकरणानीवातीव उपकरोतीति निश्चप्रचम्। परमपूतपाणिनिमुनिप्रणीताष्टाध्यायीग्रन्थे प्रथमाध्याये तृतीयपादे तृतीयसूत्रमिदम्। सूत्रेणानेनोपदेशे अन्त्यस्य हल्वर्णस्येत्संज्ञा विधीयते। यस्य हलो ''हलन्त्यम्''[१] इति सूत्रेणोत्संज्ञा भवति तस्य हल्वर्णस्य ''तस्य लोपः''[२] इति सूत्रेण लोपो विहितः श्रीमता पाणिनिमुनिना। लोपो नाम तेषामित्संज्ञकवर्णानां प्रसक्तानां त्रैकालिकसंसर्गावच्छिन्नप्रतियोगितानिरूपकदर्शनत्वावच्छिन्नप्रतियोगिताको दर्शनात्यन्ताभाव एवेति पाणिनीये पदशास्त्रे व्यपदिश्यते। उपदेशेऽन्त्यं हल् इत्स्यादित्यर्थबोधकहलन्त्यमिति सूत्रस्थोपदेशपदार्थो भट्टोजीदीक्षितेन स्वप्रणीतायां प्रौढमनोरमायामित्थमुपवर्णितः। तद्यथा -

धातुसूत्रगणोणादिनामलिङ्गानुशासनम्।
आगमप्रत्ययादेशाः उपदेशाः प्रकीर्तिता ।। इति।

रामः, पचति, दाक्षिः, पाकः इत्यादौ सुप्तिङिञ्ण्वुलादयः प्रत्ययाः पदसाधुत्वसम्पादनाय श्रीमता पाणिनिना प्रण्यनायिषत। तेषां प्रत्ययानामन्त्यवर्णानामित्संज्ञाविधानाय ''हलन्त्यम्'' इति सूत्रं श्रीमता पाणिनिमुनिना प्रण्यनायि। येषामित्सज्ञकवर्णानां हलां हलन्त्यम् इति सूत्रेणेत्संज्ञा तेषां लोपविधानमपि सूत्रकारादिष्टं भवति। यतो हि रामः, पचति, पाचकः, दाशरथिः इत्यादिप्रयोगेषु तेषामश्रुतत्वाम्। तेषामित्संज्ञकवर्णानां हलामित्संज्ञायास्सिद्धये वैयाकरणानां सर्वप्रथमं हलादिप्रत्याहारज्ञानमत्यावश्यकम्। यादृशप्रत्याहारज्ञानमन्तरेत्संज्ञकवर्णानां हलां ''हलन्त्यम्'' इति सूत्रेणेत्संज्ञा विधातुन्नशक्यते। तच्च प्रत्याहारज्ञानं ''आदिरन्त्येन सहेता''[३] इति सूत्रार्थज्ञानाधीनम्। तच्च प्रत्याहारज्ञानमित्पदार्थज्ञानमन्तरा नैव सम्भवति। इत्पदार्थज्ञानञ्च ''हलन्त्यम्'' इति सूत्रार्थज्ञाननाधीनम्। अनया दिशा हलन्त्यम्, आदिरन्त्येन सहेता इति सूत्रयोः परस्परार्थसापेक्षत्वात्तयोरन्योन्याश्रयदोषः प्रसज्यते। तथाहि- हलन्त्यम् इत्यत्र हलि अन्त्यमिति सप्तमी समासबोधितविग्रहवाक्यमाध्यमेन हलिति सूत्रेऽन्त्यमित्यादित्यर्थः लभ्यते। वाक्यार्थज्ञानं प्रति पदार्थबोधस्यावश्यकत्वाद्धल्पदार्थज्ञानोत्तरमेव ''हलन्त्यम्'' इति सूत्रस्य प्रवृत्तिः। हल्पदार्थज्ञानाय प्रत्याहारज्ञानमावश्यकम्। अयञ्च प्रत्याहारपदार्थः आदिरन्त्येन सहेता'' इति सूत्रार्थाधीनः। अतो हलन्त्यमिति सूत्रस्यादिरन्तयेन सहेता इति सूत्रापेक्षा वर्तते। इत्पदार्थज्ञानमन्तरा प्रत्याहारज्ञानं नैव सम्भवति। तच्चेत्पदार्थज्ञानं हलन्त्यमिति सूत्रार्थाधीनम्। अतः ''आदिरन्त्येन सहेता'' इति प्रत्याहारविधायकसूत्रस्य हलन्त्यमिति सूत्रापेक्षा वरीवर्ति। एवञ्च पूर्वोक्तदिशा ''हलन्त्यम्'' आदिरन्त्येन सहेता इति सूत्रयोः परस्परसापेक्षत्वादन्योन्याश्रयदोषः प्रसज्यते। अतस्तद्दोषवारणाय ''हलन्त्यम्'' इति सूत्रस्यावृत्तिः क्रियते। अत्रावृत्तप्रथमसूत्रस्य हलि अन्त्यमिति विग्रहकथने शौण्डादिगणेऽन्त्यपदस्याभावात् 'सप्तमीशौण्डैः'[४] इति सूत्रेण समासः कथमिति चेच्छौण्डादिगणेऽन्त्यपदाभावेऽपि 'सप्तमी शौण्डैः' इति सूत्रे सप्तमीति योगविभागं कृत्वा तत्र सह सुपा इत्यतः सुपा इति पदमनुवर्त्व सप्तम्यन्तस्य सुबन्तेन समासविधानात् हलि अन्त्यमित्यत्र हलिति सूत्रे अन्त्यस्येत्संज्ञाविधानं सङ्गच्छते। ननु सप्तमीति योगविभागस्य भाष्यकृतानाश्रयणात् कथं तत्र सप्तमीसमास इति चेत्

तर्हि प्रथमहलन्त्यसूत्रे 'सहसुपा'[५] इति सूत्रेण समासस्तत्रसिद्ध्यत्येव।

वस्तुतस्तु हलन्त्यम् इति प्रथमसूत्रे 'सुप्सुपा' इति सूत्रस्यागतिकगतित्वेन तत्र हलः अन्त्यमिति विग्रहमुक्त्वा तत्र षष्ठी इति सूत्रेणैव समासो विधेयः। तदा ''हलन्त्यम्'' इत्यत्र हलिति सूत्रस्यान्त्यमित्यादित्यर्थलाभेनेत्संज्ञा सिद्ध्यति। आवृत्ते ''हलन्त्यम्'' इति प्रथमसूत्रे हलि अन्त्यमिति सप्तमीसमासस्वीकारेण हलिति सूत्रेऽन्त्यमित्यादित्यर्थो लभ्यते। तदानीमित्पदार्थस्य हल्प्रत्याहारज्ञानापेक्षा नास्ति। ततो हल्प्रत्याहारज्ञाननन्तरामावृत्तद्वितीयस्य हलन्त्यमिति सूत्रस्य हलोऽन्त्यमिति षष्ठीसमासं उपदेशेऽन्त्यं हलित्स्यादित्यर्थो लभ्यते। तदा हल्त्पदार्थस्येत्पदार्थपेक्षा नास्ति। पूर्वोक्तदिशा ''हलन्त्यम्'', ''आदिरन्त्येन सहेता'' इति सूत्रयोः परस्परसापेक्षया अभावात्र तयोस्सूत्रयोरन्योन्याश्रयदोषः प्रसज्यते।

अत्र केचित् - हलन्त्यम्, आदिरन्त्येन सहेता इति सूत्रयोः परस्परमन्योन्याश्रयदोषवारणाय हलित्येकदेशस्यैवावृत्तिः कार्या। तदा हस्य ल् हलिति षष्ठीसमासः कर्तव्यः। तत्र षष्ठ्याः समीप्यमर्थः। हसमीपवर्ती लकारः इत्स्यादिति तदर्थः। अतः ''आदिरन्त्येन सहेता'' इति सूत्रबोधितप्रत्याहारज्ञानापेक्षा नास्ति। ततो हल्पदार्थज्ञानं जायते। अनन्तरमुपदेशेऽन्त्यं हलित्स्यादित्यर्थलाभेन तयोस्सूत्रयोः अन्योन्याश्रयदोषो न भवति।

यद्वा हल् च ल् चेति समाहारद्वन्द्वः क्रियते। हलित्यत्र लकारः प्रश्लिष्यते। तस्य लकारस्य 'संयोगान्तस्य लोपः'[६] इति सूत्रेण लोपो विधीयते। शेषं प्राग्वत्। अतो ''हलन्त्यम्'' ''आदिरन्त्येन सहेता''[४] इति सूत्रयोरन्योन्याश्रयदोषवारणाय ''हलन्त्यम्'' इति सूत्रे हलित्येकदेशस्यैवावृत्तिः कर्तव्या, न तु सम्पूर्णसूत्रावृत्तिरिति वदन्ति।

वस्तुतस्तु पक्षद्वयमपि नैव समीचीनम्। यतोहि तत्र तावदाद्यपक्षे हस्य ल् हलिति षष्ठीसमासो नैव घटते। षष्ठ्यास्सामीप्यार्थकत्वाभावात्। किञ्च तात्पक्षे तत्र हस्य समीपादेनैव सम्बन्धो विद्यते, नतु लकारेण। अतोऽत्रासामर्थ्यात् षष्ठीसमासो नैव भवति। अत एव ब्राह्मणकम्बलः इत्युक्ते ब्राह्मणसमीपवर्त्यन्यदीयः कम्बलो न प्रतीयते। एवं चित्रगुरित्यादौ तत्समीपवर्ती वृक्षादिर्न प्रतीयते। सौत्रत्वाश्रयणे, मध्यमपदलोपसमासस्वीकारे वा महान् क्लेशः। षष्ठ्यास्सामीप्यार्थत्वाभावादेव ''अनन्तरादिषु न प्रतिषेधो वक्तव्योऽनभिधानादनन्तरादिषूत्पत्तिर्न भविष्यति'' इति [१]महाभाष्यं सगच्छते ।

हल् च ल् चेति समाहार इति द्वितीयपक्षोऽपि सुतरामनुचितः। तत्पक्षेऽपि हल् च ल् चेत्यत्र लस्य संयोगान्तलोपोऽपि दुर्लभः। 'यणः प्रतिषेधोवाच्यः' इति वार्तिकेन तत्र लकारस्य संयोगान्तलोपप्रतिषेधविधानात्। अत एव तत्र संयोगान्तलोपे 'यणः प्रतिषेधो वक्तव्यः' इतिभाष्यवचनं सङ्गच्छते। तद्वार्तिकप्रत्याख्यानपक्षेऽपि नात्र निर्वाहः। 'संयोगान्तस्य लोपः' इति सूत्रे 'झलो झलि' इति सूत्राज्झल्ग्रहणमपकृष्य संयोगान्तस्य झलो लोपविधानात् प्रकृतेलकारस्य झल्त्वाभावान्नात्र संयोगान्तलोपस्यावकाशः।

किञ्च पदार्थज्ञानं विना वाक्यार्थज्ञानस्याऽसम्भवेन हल्प्रत्याहारसिद्धेः पूर्वं हल्पदार्थस्याप्रसिद्धत्वात् - महाविवक्षा न भवति। अतः ''हलन्त्यम्'' ''आदिरन्त्येन सहेता'' इति सूत्रयोः परस्परं प्रसक्तान्तयोन्याश्रयदोषवारणाय हलन्त्यमिति सम्पूर्णसूत्रस्यैवावृत्तिः कर्त्तव्या, न तु हलीत्येकदेशस्येति प्रौढमनोरमाकारस्य भट्टोजीदीक्षितस्य निगूढाशयः। प्रपञ्चितञ्चैतच्छ्रीमता भट्टोजीदीक्षितेन स्वप्रणीतायां प्रौढमनोरमायाम्। यद्यपि भाष्ये ''हलन्त्यम्'' इत्यत्रान्योन्याश्रय दोषवारणाय हलित्येकशेषप्रदर्शनेन तन्मात्रस्यैवावृत्तिबोद्धुर्बोधोपयोगिनी न सम्भवतीति हलन्त्यमिति सम्पूर्णसूत्रावृत्तिरेव

तद्भाष्यत: फलति। अत एवोक्तं वैयाकरणनागेशेन स्वप्रणीते लघुशब्देन्दुशेखरे[७] - ''अत्रोच्चायितुरेकशेषनिर्देशो, बोदधृस्त्वावृत्त्या बोध:'' इति। हलन्त्यमिति सम्पूर्णसूत्रावृत्ते: - प्रामाणिकत्वादेवान्योन्याश्रयदोषपरिहाराय ''हलन्त्यमित्संज्ञं भवति लकारश्चेद्भवतीति वक्तव्यमित्युक्त्वैकशेषनिर्देशादा सिद्धम्। हल् च हल् च हलन्त्यमिति'' ''हलन्त्यम्'' इति सूत्रस्थं भाष्य[६] सङ्गच्छते। अस्य भाष्यस्यायमर्थ:। हलन्त्यमित्यत्र हल् च हल् च हलन्त्यमिति कृतैकशेषेण हल्पदेन सम्बन्धसामान्यषष्ठ्या समास:। तत्सूत्रेऽन्त्यशब्दस्य द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं प्रत्येकमभिसम्बध्यते'' इति न्यायेनोभयत्रान्वय:। तथा च हल्सूत्रान्त्यं, हल्रूपान्त्यञ्चेदिति बोधेनोच्चारयितुरेकशेषेण, बोद्धृस्त्वावृत्या च बोधो भवतीति हलन्त्यमिति सम्पूर्णसूत्रावृत्तिरेव कार्या'' इति।

अयमत्र पूर्वपक्ष: - ननु पूर्वोक्तदिशा हलन्त्यम्, आदिरन्त्येन सहेता इति सूत्रयोरन्योन्याश्रयदोषवारणेऽपि साम्प्रतं ''हलन्त्यम्'', ''न विभक्तौ तुस्मा:'' इति सूत्रयोरन्योन्याश्रयदोषापत्तिस्तदवस्थैव। तथाहि - 'हलन्त्यम्' इति सूत्रेणोपदेशे अन्त्यवर्णस्य हल: इत्संज्ञा विधीयते। ''न विभक्तौ तुस्मा:''[८] इति सूत्रेण विभक्तिस्थानां तुस्मानामित्संज्ञा निषिद्ध्यते। प्राप्तिपूर्वको हि निषेध इति नियमानुसारं तवर्गसकारमकारवर्णानां हलन्त्यमिति सूत्रेण प्राप्तेत्संज्ञाया निषेधाय श्रीमता पाणिनिना न विभक्तौ तुस्मा: इति सूत्रं प्रणीतम्। तत्र विभक्तिस्थानां तुस्मानां वर्णानां यदि हलन्त्यमिति सूत्रेणेत्संज्ञा स्यात् तदा तेषामितसंज्ञानिषेधाय न विभक्तौ तुस्मा: इति निषेध आवश्यक:। अतो न विभक्तौ तुस्मा: इति सूत्रस्य तु हलन्त्यमिति सूत्रापेक्षा वर्तते। अभावज्ञानस्य प्रतियोगिज्ञानसापेक्षत्वात्। एवमित्संज्ञकवर्णानां तेषां तुस्मानां न विभक्तौ तुस्मा: इति सूत्रेण तत्संज्ञानिषेधाय ''हलन्त्यम्'' इति सूत्रस्य न विभक्तौ तुस्मा: इति सूत्रापेक्षा वर्तते। पूर्वोक्तदिशा ''हलन्त्यम्'' न विभक्तौ तुस्मा:'' इत्यनयोस्सूत्रयो: परस्परसापेक्षत्वादन्योन्याश्रयदोष: प्रसज्यते इति।

अत्रेदं समाधानम् - विभक्तिस्थानां तुस्मानामित्संज्ञाविधायकं हलन्त्यमिति सूत्रमुत्सर्ग:। तेषां तुस्मानामित्संज्ञानिषेधकं - ''न विभक्तौ तुस्मा:'' इति सूत्रन्तस्यापवाद:। ''उत्सर्गसमानदेशा अपवादा:'' इति न्यायेनोत्सर्गापवादयोस्समानदेशत्वं सर्वशास्त्रसम्मतम्। यत्रोत्सर्गापवादयोरेकत्रैवैकदैव प्राप्तिस्तत्रापवादशास्त्रेणोत्सर्गशास्त्रस्य बाधो भवति। अपवादशास्त्रस्योत्सर्गशास्त्रसापेक्षत्वात्। यथा न्यायनये अभावज्ञानस्य प्रतियोगिज्ञानसापेक्षा वर्तते, न तु प्रतियोगिज्ञानस्याभावज्ञानसापेक्षा। तद्यथा घटो नास्तीत्यत्र तादात्म्यातिरिक्तसम्बन्धावच्छिन्नाधेयतासम्बन्धावच्छिन्नसंयोगसम्बन्धावच्छिन्नघटत्वत्वावच्छिन्नल-संयोगसम्बन्धवच्छिन्नघटत्वत्वावच्छिन्नघटनिष्ठप्रतियोगितानिरूपकस्वरूपसम्बन्धवच्छिन्नघटत्वावच्छिन्नप्रतियोगिता-कात्यन्ताभावविषयकज्ञानं प्रति घटत्वावच्छिन्नघयत्वेतरधर्मानवच्छिन्नघटनिष्ठप्रतियोगिज्ञानं कारणं भवति, न तु घटत्वावच्छिन्नघटत्वेतरधर्मानवच्छिन्नघटत्वत्वावच्छिन्नप्रतियोगिपदार्थस्य घटस्य घटाभावीयज्ञानसापेक्षा। तद्वदेव प्रकृतेऽपि ''हलन्त्यम्'', ''न विभक्तौ तुस्मा:'' इति सूत्रद्वयविषयेऽपि तुस्मानामित्संज्ञानिषेधबोधकस्य ''न विभक्तौ तुस्मा:'' इत्यपवादशास्त्रस्योत्सर्गशास्त्रेण हलन्त्यमित्यनेनापेक्षा भवति, न तु तुस्मानामित्संज्ञाविधायकस्योत्सर्गस्य हलन्त्यमिति सूत्रस्य तुस्मानामित्संज्ञानिषेधबोधकस्य न विभक्तौ तुस्मा: इति अपवादशास्त्रापेक्षा। एवञ्च निरूक्तदिशा ''हलन्त्यम्'', ''न विभक्तौ तुस्मा:'' इत्याकारकयोरुत्सर्गापवादयोरन्योन्याश्रयदोषो लेशतोऽपि नास्ति। प्रपञ्चितञ्चैतद्वैयाकरणनागेशेन स्वप्रणीते लघुशब्देन्दुशेखरे तथाऽस्मत्परमेष्ठिगुरूचरणप्रणीते लघुशब्देन्दुशेखरव्याख्याने गुरुप्रसादे'' च ।

**प्रस्तुतशोधपत्तानुसन्धातृसमीक्षा**

एतावता प्रबन्धेन प्रौढमनोरमालघुशब्देन्दुशेखरग्रन्थद्वयोक्तदिशा ''हलन्त्यम्'' ''आदिरन्त्येन सहेता'' इति

सूत्रयो: प्रसक्तअन्योन्याश्रयदोषस्तत्परिहारश्च प्रस्तुतशोधपत्रप्रणेता मया यथाशक्ति यथामति साङ्गोपाङ्गं न्यरूपिषाताम्। एवं स्थिते वैयाकारणसिद्धान्तकौमुदीप्रौढमनोरमालघुशब्दरत्नाकारणां पूवोक्तान्योन्याश्रयदोषप्रतिपादनविषये तथा वदयाकरणमहाभाष्यदिग्रन्थमुखेनतान्निराकरणे च लेशतोऽपि वैमत्यन्नास्ति प्रत्युत तेषां ग्रन्थकाराणामवच्छेदेनैवत्यमेवास्ति तथैव पुर्वाक्तसुत्रयोररन्योन्याश्रय दोषनिराकरणविषये केचित्काराणाम्मतखन्डनावसरेऽपि पूर्वक्तानां ग्रन्थकारणामैकमत्यमेवास्तीत्यलम्प-ल्लवतल्लजककल्पानल्पजल्पनेनेनि दिक्।।

पादटिप्पणी -

१. पा.अ.२.१.४०
२. पा.अ.२.१.४
३. पा.अ.८.२.२३
४. पा.अ.२.२.७९
५. १.३.३
६. १.३.४
७. लघुशब्देन्दुशेखर संज्ञाप्रकरणे १.३.४

आचार्य:
नव्यव्याकरणविभाग:
राष्ट्रियसंस्कृतसंस्थानम्
श्रीसदाशिवपरिसर, पुरी

# वृद्धिरादैच्

**प्रो.अनुपमा पृष्टिः**

अष्टाध्यायां प्रथमं 'वृद्धिरदैच्'[१] इति सूत्रं मङ्गलार्थमुक्तम्। तत्तु मङ्गलार्थमादितो वृद्धिशब्दं प्रयुक्ते इति भाष्येणैव ज्ञापितम्। आदैच्च वृद्धिसंज्ञः स्यादिति सूत्रार्थः। वृद्धिरादैजिति सूत्रं व्याख्यातुमादौ भाष्ये तत्पदच्छेदमाह द्विपदात्मकं सूत्रमिदम्। ''कृतमनयोः साधुत्वम्'' इति भाष्यवचनात्। तथाहि 'आदैच्' इत्यत्र इतरेतरयोगद्वन्द्वे द्विवचनस्य 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः'[२] इति सूत्रेण लुगापत्तिः। वस्तुतः तदेव 'कृतमनयो साधुत्वम्' इति भाष्यंस्यान्यथोपपत्तैः अत्र न स्वीकर्त्तव्या, एवञ्च पस्पशाह्निकस्थ भाष्यानुरोधेन पदत्रयं प्रतिपादितम्। उक्तञ्च भाष्ये- ''न केवलं चर्चा पदानि व्याख्यातम्'' - वृद्धिः, आत्, ऐच् इति । तत्र आदैच इति प्रथमान्तपदम्। एवं 'चोः कु'[३] इति सूत्रेण कुत्वं न । यतः छन्दोवत् सूत्राणि भवन्ति। अतः अयस्मयादीनिच्छन्दसि इत्यनेन पदसंज्ञायपवाद्य भसंज्ञयां पदत्वाभावात् पदान्त कुत्वं न, नन्वत्र 'आदैच' पदे यदि समाहारदन्द्वः क्रियते, तर्हि 'द्वन्दाच्चुदषहान्तात्समाहारे'[४] इति टजापत्तिः जायते। तेन आदैच इति उत्पद्यते। परन्तु 'समासान्तविधेरनित्यः' इति परिभाषया टच्प्रसङ्गोनित्यः। अस्याः परिभाषायाः अनित्सत्वप्रसङ्गे 'प्रतेरंश्वादयस्तत्पुरुषे'[५] इत्यन्तोदात्तत्वायांश्वादिषु राजन्शब्दपाठोऽस्या ज्ञापकः। तथाहि प्रतिराजा इत्यत्र 'राजाहः सखिभ्यष्टच्'[६] इति टचि चित्वात् 'चितः' इत्यनेन अन्तोदात्तत्वे सिद्धे अंश्वावादिगणे राजन्शब्दस्य पाठस्यावश्यकता नास्ति। तद्वत् 'द्वित्रिभ्यां पाद्यन्मूर्धसु बहुव्रीहौ'[७] इति अन्तोदात्तस्वरविधायकसूत्रभाष्य मुर्धन् शब्दान् समासान्तषप्रत्यये मूर्धेषु इति निर्दिशः युक्तः । परन्तु सूत्रे मूर्धसु इति पठदर्शनात् समासान्तविधिरनित्यः इति ज्ञाप्यते, अतः अत्र समासान्त टच्प्रसङ्गरनित्यः।

षडिविधेषु सूत्रेषु संज्ञासूत्रमिदम्। वृद्धिः आत् ऐच् इत्यत्र तपरकरणेन विग्रहद्वयमुपतिष्ठते। तेन तःपरो यस्मात् इति बहुव्रीहिसमासेन आकारस्य तपरपदेन ग्रहणम्।[८] तात्परः तपरः इति पञ्चमी तत्पुरुषसमासेन ऐकारस्य तपरपदेन ग्रहणम्। एतदर्थं वृक्ष ओदनः इत्यत्र चतुर्मात्रा व्यावृत्तये तपरकरणम्। तेन क्रमानुसारेण द्विमात्रिक ओकारस्य ऐकारस्य च ग्रहणम् ।

'वृद्धिरादैच्' इति सूत्रे 'अस्थिदधिसक्थ्यक्षणामनङुदात्तः'[९] इत्यनेन अनङि अनुदात्तत्वे उदात्तपदोच्चारणरूपयत्नविशेषस्य सत्वाद् अत्र गुणस्य भेदकत्वं स्वीक्रियते, परन्तु 'वृद्धिरादैच्' सूत्रे यत्नविशेषस्याभावात् गुणानामभेदकत्वं मन्यते। नन्वत्र गुणाः अभेदकाः इत्यस्मिन् पक्षे अकारेण स्वतः षण्णामाकाराणां सिद्धेऽपि पुनः तपरकरणं सन्देहदूरिकरणाय प्रवर्त्तते ।

अत्र पुनः शङ्का उदेति - वृद्धिपदेन तद्भावितानां ग्रहणमथवा अतद्भावितानामिति चेत् द्वयोः ग्रहणम्। तद्भावितवृद्धिः नाम पूर्वं नासीत् अनन्तरं जायते । यथा- उपगोरपत्यम् औपगवः। अतद्भावितवृद्धिर्नाम पूर्वं वृद्धिसंज्ञकवर्णः विद्यते। यथा - शालायां भव शालीयः। वृद्धिशब्दोऽत्र पदपरकः, न तु अर्थपरकः। अत्र अर्थपरकतायाः असम्भवात्, व्याख्यानाच्च। तथा च आदैचो वृद्धिपदाऽभिन्नाः - इति वाक्यार्थः। पदपदार्थयोः तादात्म्यस्यङ्गिकारात् भेदसहिष्णुरभेदः। यथा 'रामेति द्वयक्षरं नाम मानभङ्गः पिनाकिनः'। इत्यादौ पदपदार्थयोः अभेदसन्बन्धः अनुभवसिद्धम्। अत्र मञ्जूषायमपि उक्तं न च मधुशब्दोच्चारणे मुखे माधुर्यं स्यात्, शब्दार्थयोरभेदादिति नाशङ्कनीयम्। भेदेन सह अभेदस्य स्वीकारेण सर्वथा अभेदानभ्युपगमात् अत्रापि शब्देन सह बौद्धार्थस्य ग्रहणम्। पदपदार्थयोस्तादात्म्यस्यैव शक्तिताया

मञ्जूषायामुपपादितत्वात्। तदुक्तं भतृहरिणा-

वृद्ध्यादयो यथा शब्दा: स्वरूपोवनिबन्धना:
आदैच् प्रत्यायितै: शब्दै: सम्बन्ध यान्ति संज्ञिभि: ।।

अर्थात् -

संज्ञाशब्दानां यदृच्छाशब्देन व्यवहार:। तस्मात् ज्ञायते पाणिनिना स्वेच्छया संज्ञाशब्दानां व्यवहार: कृत:। एतेषां शब्दानां संज्ञाशब्देन उपदेशकरणात् प्राक् शक्तिग्रहाऽसम्भवात् लोके अनित्यत्वेन व्यवहारो भवति। संज्ञाविषयेऽनित्यत्वव्यवहारात् एतत्संज्ञासूत्रं नियमार्थकं भवति। तात्पर्यं यत् 'सर्वे सर्वार्थवाचका:' इति नियमानुसारेण वृद्धिशब्द: अन्यार्थेन सह आदैच् अर्थस्यापि वाचको भवति। परन्तु व्याकरणशास्त्रो वृद्धशब्दस्य संज्ञाकरणात् वर्द्धनेत्यादि अर्थस्य ग्रहणं न, तत्र नियमो विद्यते 'कृत्रिमाकृत्रिमयो: कृत्रिमे कार्यसम्प्रत्यय:', इति संख्यासंज्ञा सूत्रे भाष्ये उक्तम्। अत: उक्तम् - ''एकोऽयमर्थे एकोऽयं शब्दस्य व्यवहारात् प्राकरणिकार्थग्रहणात् अन्यार्थस्यानुपस्थित्या नियमत्व व्यवहार:। अत: भर्तृहरिणोक्तम्- 'व्यवहाराय नियम: संज्ञाया संज्ञिनि क्वचित्', इत्यादिना प्रतिपादितम्। ननु वृद्धिपदं पूर्वमादैच्पदस्य बोधजनकत्व ज्ञानस्योत्पादेऽपि बोधजनकतारूपाया: शक्तेरनुत्पादात् शक्ते: नित्यताहानि: न भवति। अत: भाष्यकाराणां वचनम् - 'सिद्धे शब्दार्थे सम्बन्धे' इति तत्र दोष: न जायते। एवञ्च व्याकरणशास्त्रे यत् घि, टि, घु, भ इत्यादिनिसंज्ञानां व्यवहार: दृश्यते। तस्य पाणिनिप्रयुक्तत्वात् साधुत्वम्।

केषाञ्चित् मते अत्र 'वृद्धिरादैच्' इति सूत्रे कार्यकालपक्षे 'आत्' इति तपरकरणस्यावश्यकता नास्ति, तथाहि तेषां मते संज्ञासूत्राणां विधिसूत्रेण सहैकवाक्यतया वाक्यार्थबोध: जायते। तत्र 'वृद्धि' इति उद्देश्यस्य आदैच् विधेयत्वात् 'भाव्यमानेन सवर्णानां ग्रहणं न' इति परिभाषया सवर्णेवर्णानां निषेधत्वात् तपरकरणेन निषेधस्यावश्यकता नास्ति। परन्तु नागेश: तन्नाङ्गीकरोति। तेषां मते कार्यकालपक्षे 'मृजेर्वृद्धि:'[१०] इति सूत्रे वृद्धपदार्थज्ञानार्थ 'वृद्धिरादैच्' इति सूत्रस्योपस्थिति: जायते। तत: पूर्वं 'वृद्धिरादैच्' इति सूत्रस्य वाक्यार्थबोध: जायते। एवं प्रकारेण विधिसूत्राणां संज्ञासूत्राणां च पृथक्पृथक्रूपेण वाक्यर्थबोधे उपजीव्योपजीवकभावविषयताप्रयोजक: वाक्यैकवाक्यता भवति। अत्र संज्ञासूत्रस्यावाक्यार्थबोधस्तु उपजीव्य: विधिशास्त्रस्य वाक्यार्थबोधस्तु उपजीवक:। अत: 'अदैच्' इति पदमुद्देश्यम्। तस्मात् तपरकरणस्य आवश्यकता विद्यते। अत एव वाक्यभेदेनान्वय: स्वीकारात् 'ष्यङ: सम्प्रसारणम्'[११] इति सूत्रभाष्यं सङ्गच्छते। तस्य 'भस्य'[१२] इत्यस्याधिकारत्वात् भपदार्थज्ञानप्रसङ्गे 'यचि भम्'[१३] इत्यस्योपस्थिति: कार्यकालपक्षे एव भवति। न तु यथोद्देशपक्षे ।

आचार्याक, नव्यव्याकरणविभाग:
राष्ट्रियसंस्कृतसंस्थानम्, श्रीसदाशिवपरिसर:, पुरी

## पादटिप्पणी -

१.पाणिनीय अष्टाध्यायी - १.१.१ २.पा.अ. ७/१/३९ ३.पा.अ. ८/२/३०
४ पा.अ. ५/४/२०६ ५.पा.अ. ५/४/८२ ६. पा.अ. ५/४/९१
७.पा.अ. ६/१/१६३ ८.पा.अ. ५/२/४३ ९.पा.अ. ७/१/७५
१०.पा.अ. ७/२/११४ ११.पा.अ. ६/१/१३ १२. पा.अ. ६/४/१२९
१३.पा.अ. १/४/१८

# अर्थवदधातुरप्रत्ययः प्रातिपदिकम्

## डॉ.रामवदनपाण्डेय

भगवता पाणिनिना विरचितायामष्टाध्यायाम् बहुविधानि सूत्राणि सन्ति। तेषु तेष्वन्यतममिदं सूत्रं विद्यते, ''अर्थवदधातुरप्रत्ययः प्रातिपदिकम्''[१] इति। अत्र सूत्रे चत्वारि पदानि सन्ति। अर्थवत्, अधातुः, अप्रत्ययः, प्रतिपादिकम् इति।

अत्र अधातुरिति पदं विचार्यते। मान्याः ''विशिष्टबुद्धौ विशेषणज्ञानं कारणम्'' इति रीत्या सूत्रघटकीभूतस्य अधातुपदस्य कोऽर्थः इति जिज्ञासायामाह न धातुः इति अधातुः अर्थात् धातुभिन्नः इति फलति अथवा एकार्थीभावानभ्युपगमे नञर्थो भेदः सामानाधिकरण्यानुरोधेन भेदस्य भेदवति लक्षणां स्वीकृत्य तथा चास्य अभेदेन सम्बन्धेन अर्थवत्यन्वयः एतदेकदेशे भेदे धातुपदार्थस्य प्रतियोगितासम्बन्धेनान्वयः। तथा च अत्र भवति अन्तराभासमानविषतायाः विषयः तच्चेत्थम् धातुपदार्थस्य प्रतियोगित्वसम्बन्धेन भेदे, भेदस्य स्वरूपसम्बन्धेन आश्रयेऽन्वयः आश्रयभेदसम्बन्धेन अर्थवत्यन्वयः एवञ्च भेदे धातुनिरुपति विशेष्यता तथा च आश्रयनिरुपितप्रकारता, तथैव आश्रयेऽपिभेदनिरुपितविशेष्यता तथा अर्थवन्निरूपितप्रकारता, एवञ्च एकस्मिन्नेव अधिकरणे यदा प्रकारताविशेष्यता भवति सैव अन्तराभासमानविषयताप्रसंगः।

किन्तु एवम्भूताप्रसंगे मतभेदेन शाब्दबोधः द्विधा - १. अवच्छेद्यावच्छेदकभावः इति गदाधरमतम्, २.अभेदसम्बन्धः इति जागदीशमतम्।

गदाधरमतानुसारेण अन्तराभासमानविषयतया यदि अवच्छेद्यावच्छेदकभावः तथा शब्दबोधः इत्थम् प्रातियोगित्वसम्बन्धावच्छिन्नधातुत्वावच्छिन्नप्रकारतानिरूपितभेदत्वावच्छिन्नविशेष्यत्वाव-च्छिन्नस्वरुपसम्बन्धावच्छिन्नभेदत्वावच्छिन्नप्रकारतानिरुपिताश्रयनिष्ठविशेष्यत्वावच्छिन्ना-भेदसम्बन्धवच्छिन्नप्रकारतानिरूपितार्थवन्निष्ठविशेष्यताकः।

जगदीशमतानुसारेण अन्तराभासमानविषयतयोः अभेदसंसर्गः तथा च शाब्दबोधः इत्थम् - प्रतियोगित्वसम्बन्धावच्छिन्नधातुत्वावच्छिन्नप्रकारतानिरुपितभेदत्वावच्छिन्नविशेष्यत्वाभिन्नस्वरूपसम्बन्धवच्छिन्नभेदत्ववच्छिन्न-प्रकारतानिरुपित अर्थवन्निष्ठविशेष्यताकः शाब्दबोधः फलति।

उभयो पक्षयोः मध्ये आद्यमतमेव सम्यग्, द्वितीय मते तु महाननर्थः तथाहि संयोगेन पुरुषाभाववान् दण्ड इति बुद्धिं प्रति संयोगेन पुरुषवान् दण्ड इति निश्चयः यथा प्रतिबन्धको भवति तथैव तादृशबुद्धिं प्रति रक्तदण्डवत्पुरुषवानयमिति निश्चयस्यापि संयोगसम्बन्धावच्छिन्नपुरुषप्रकारतानिरुपित दण्डविशेष्यताशालिनिश्चयत्वरुपप्रतिबन्धकतावच्छेदकवत्त्वेन प्रतिबन्धकत्वं स्यात् पुरुषनिष्ठदण्डप्रकारतानिरुपितविशेष्यत्वदेशविशेष्यतानिरुपितप्रकारत्वयोः दंडनिष्ठरक्तप्रकारता-निरुपिताविशेष्यत्वपुरुषविशेष्यतानिरुपितप्रकारत्वयोश्चैक्यात् इति। सम्बन्धावच्छिन्नत्वमपि प्रकारतायामेव युक्ततत्र तु विशेष्यतायाम्। तथाहि - संयोगेन - 'घटोऽवृत्तिरिति' बुद्धिं प्रति संयोगेन घटवद्भूतलं संयोगेन घटवान् पर्वतः इत्यादि निश्चयानां संयोगसम्बन्धावच्छिन्नघयतवावच्छिन्न-प्रकारताशालिनिश्चयत्वेनैकरुपेणैव प्रतिबन्धकत्वम् इति लाघवम्। साम्प्रतं शाब्दबोधकरणानन्तरम् किं नाम धातुभिन्नत्वम् ? यदि धातुप्रतियोगिक भादवत्वम् तदा तद्व्यक्तिर्नेति प्रतीतसिद्धतद्यक्तित्वावच्छिन्नभूधातुनिष्ठप्रतियोगिताकभेदवारणमशक्यम्। धातुत्वावच्छिन्नप्रतियोगिताकभेदनिवेशे तु धातुत्वस्य प्रतियोगितावच्छेदकत्वे मानाभावेनाप्रसिद्धिः स्यात्। न चायन्न धातुरिति प्रतीतिरेव मानं धातुत्वे प्रतियोगितावच्छेदकत्वानवगाहित्वे तस्या अयं धातुरिति बुद्धिं प्रति प्रतिबन्धकत्वमेव नोपपद्येत, नहि धातुप्रतियोगिकभेदप्रकारकनिश्चयत्वेन तच्छक्येन कल्पयितुम् विशेषोभयभेदप्रकारकनिश्चयस्यापि प्रतिबन्धकत्वापत्तेः।

किन्तु धातुत्वमात्रावच्छिन्नप्रतियोगिताकभेदप्रकारक-निश्चयत्वेनेति निरुक्तप्रतीतौ धातुत्वे प्रतियोगितावच्छेदकत्वत्वावगाहित्वमावश्यकमतो नोक्ताप्रसिद्धिरिति वाच्यम्।

प्रतियोगितावच्छेदकतानवगाहनेऽपि प्रतियोगितासम्बन्धावच्छिन्नधातुत्वमात्रावच्छिन्नप्रकारता-निरुपितभेदत्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरुपसम्बन्धावच्छिन्नभेदत्वावच्छिन्नप्रकारतानिरुपिते-दन्त्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैवायं धातुरिति बुद्धिं प्रति तस्याः प्रतिबन्धकत्वसम्भवात् उक्तप्रसिद्धिस्तथैव। यद्युपलक्षणतया यत्र तत्त्वस्य भानं तत्रायत्र तद्धातुरिति निश्चयस्य भेदांशे प्रतियोगितासम्बन्धा-वच्छिन्नधातुत्वमात्रवच्छिन्नप्रकारताकत्वविरहात्प्रतिबन्धकत्वात्र स्यात्। मन्मते च उपलक्षणतया भासमानत्वस्य प्रतियोगितावच्छेदकत्वविरहेण धातुत्वमात्रावच्छिन्नप्रतियोगिताकभेदप्रकारकेदन्त्वावच्छिन्नविशेष्यवनिश्चयत्व-रुपप्रतिबन्धकतावच्छेदकस्य उक्त निश्चये सत्तया तदुपद्यते एवञ्च नोक्ता प्रसिद्धिरित्युच्यते तदापि तद्धातुर्न्नेति प्रतीतिसिद्धतद्धातुत्वावच्छिन्नप्रतियोगिताकभेदवारणमशक्यमेव धातुत्ववच्छिन्नप्रतियोगिताकत्वात्। न च धातुत्वव्यापकप्रतियोगितानिरुपकभेदवत्वमेव धातुभिन्नत्वमुक्तभेदीयप्रतियोगितायाः धातुत्वव्यापकत्वान्नदोष इति वाच्यं घयत्वेन धातुर्न्नेति प्रतीतिसिद्ध घयत्ववच्छिन्न धातुप्रतियोगिताक भेदस्य अपरिहारात् तत्प्रतियोगितायां धातुत्वव्यापकत्वस्य सत्वात्। यदि निरुक्तप्रतियोगितायां धातुत्ववच्छिन्नत्वं निवेश्यमिति घटत्वेन धातुभेदीयप्रतियोगितायाः धातुत्वानवच्छिन्नत्वेन दोषवारणासम्भवात् इत्युच्यते तदापि घटत्वधातुत्वाभ्यां धातुभेदस्य धातुत्वावच्छिन्न धातुत्वव्यापक-प्रतियोगिताकत्वेन संग्रहापत्तिः न च धातुत्वनिष्ठावच्छेदकतानिरुपित धातुत्वेतरनिष्ठावच्छेदकत्वा-निरुपिता धातुत्वाव्यापकप्रतियोगिताकभेदवत्वमेव तत् तथा चोक्तभेदप्रतियोगितायाः धातुत्वेतरघटत्वनिष्ठावच्छेदकतानिरुपिततत्वान्न दोष इति वाच्यं धातुत्वेन धातुघटोभयभेदस्य तादृशप्रतियोगिताकत्वेनाशक्यवारणत्वात्। न च निरुक्तरूपधातुत्वमात्रवच्छिन्नत्वेसति धातुत्वसमनियतायाः प्रतियोगिता तन्निरूपकभेदवत्वमेवतत् धातुत्वसमनियतत्वञ्च धातुत्वविशिष्टत्वम् वैशिष्टयञ्च स्वव्यापकत्वस्ववृत्तित्वोभयसम्बन्धेन, वृत्तित्वञ्च व्यापकता सम्बन्धेन, एवञ्चोक्तभेदीयप्रतियोगिता व्यापकत्वस्य धातुत्वे विरहेण तद्योषस्यविराम इति वाच्यम्। धातुत्वेन तद्धातुतदन्यधातुभयभेदमादाय दोषोहि तदवस्थ एव, तस्यापि धातुत्वसमनियतप्रतियोगिताकत्वाम्।

अत्र धातुगतैकत्ववृत्तिप्रतियोगिताकभेदत्वमेव धातुभिन्नत्वम्, प्रतियोगितायमेकत्ववृत्तित्वञ्च निरुपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकतानिरुपकावच्छेदकतात्वनिष्ठावच्छेदकतानिरुपकप्रतियोगितानिरुपकपर्याप्त्यनुयोगिता-वच्छेदकत्वस्वनिरुपकानुयोगितानिरुपितनिरुपकतानिष्ठानिरुपितत्वसम्बन्धावच्छिन्नावच्छेदकतानिरुपकावच्छेदकतात्वनिष्ठा-वच्छेदकतानिरुपकप्रतियोगितानिरुपकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेन ।

तथाच धातुत्वेन घटो नातिभेदीयप्रतियोगितायाः स्वावच्छेदकतात्ववच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिता-वच्छेदकत्वस्य धातुत्वगतैकत्वे सत्त्वेऽपि स्वनिरुपकानुयोगितानिरुपितघटत्वावच्छिन्ननिरुपकतावच्छेदक-तात्वावच्छिन्नप्रतियोगिताकपर्याप्त्युनुयोगितावच्छेदकत्वविरहेण तादृशप्रतियोगितायामुक्तोभयसम्बन्धेन धातुत्वगतैकत्वाभावान्न दोषः।

पादटिप्पणी -

१. अष्टाध्यायी - १.२.४५

प्राचार्यः
श्रीएकरसानन्द आ.स.म.वि.

# कर्तृकारकविचार:

डॉ. उमेश्चन्द्रमिश्र:

लोके वाक्यदेवार्थववोध: । ''सुप्तिङ्चयो वाक्यं क्रिया च कारकन्विता''इत्युक्तिवसाद् सुवन्तार्थप्रतिपादकस्य कारकस्य प्राधान्यमस्त्येव । कारकशब्दोऽयंव्युत्पन्न: ण्वुलन्त: कर्तृपर्याय: तथा च संज्ञाशब्द: अव्युत्पन्नो निमित्तपर्याय: तत्रेह यदि पूर्वोक्तस्य ग्रहणं स्यात् तदापादानादिषु कारकशब्दो न प्रवर्तते। यथा कर्तृशब्द: ''ण्वुल्तृचौ''१ इति कर्त्तरि व्युत्पादित:, तथा कारकशब्दोऽपि । कर्त्ता च स्वतन्त्र: । अपादानदयश्चास्वतन्त्रा:, तत् कथं तेषु कारकव्यपदेश: स्यात् ? असति हि कारकव्यपदेशे कारकसंशब्दनेषु तेषां ग्रहणं न स्यात्। अथ तेषामपि कथञ्चित् स्वतन्त्रताभ्युपेयेत। एवञ्च तत्र कर्तृसंज्ञा प्रसज्येत। ततश्च ग्रामादागच्छति, उपाध्यायाय गां ददातीत्यादौ ग्रामादिभ्यस्तृतीया प्रसज्येत। इतरेतराश्रयश्चापि दोष: स्यात्। तथा हि कर्तृसंज्ञोत्तरकालं कारकशब्दस्य व्युत्पत्ति: तस्यां सत्यां कारकशब्दोपक्रमेण कर्तृसंज्ञा स्यात। बह्वेवं प्रतिविधेयं स्यात्। प्रतिविधाने च प्रतिपत्तिगौरवं स्यात्। निमित्तपर्यायस्य तु कारकशब्दस्य ग्रहणे न दोष: ।

कारकशब्द: पुंन्नपुंसकोभयात्मक: । अत एव ''कारके''२ इति सूत्रस्य महाभाष्ये क्वचित्कारका: इति प्रयुक्तम्, क्वचित्कारकमिति। तद्यथा कारक इति संज्ञानिर्देशश्चेत् संज्ञिनोऽपि निर्देश इति कारक: पुल्लिङ्ग: । कारक इति महती संज्ञा क्रियते। संज्ञानाम यतो न लघीय कुत एतत् प्रयोजनम्। अन्वर्थसंज्ञा यथा विज्ञायते करोतीति कारकमिति। अत्रोपर्युद्धृते भाष्ये उभयलिङ्गस्य कारकशब्दस्य निर्देश: वर्तते। कारकार्थे साधनशब्दस्य प्रयोग: महाभाष्ये वाक्यपदीये बहुधा दृश्यते। किं पुन: साधनं यद्वा किं पुन: कारकमित्यस्मिन् विषये महाभाष्ये वाक्यपदीये च मतत्रयं दृष्टिपथं समायाति। शक्ति: साधनम्। क्रियाजनकशक्तिमद्द्रव्यं यत्तत् कारकं तथा क्रिया एव साधनमीति। अस्मिन् पक्षत्रयेऽपि कारकस्य षड्भेदान् आमनन्ति सर्वे। शक्ति: साधनमिति पक्षे द्रव्येषु विद्यमाना: नित्या: कर्तृकर्मादिभेदेन षट्शक्तय: व्यवस्थिता: । यदि ताश्च शक्तय: अर्थव्यतिरक्ता: तर्हि शक्तिरहितत्वात् अर्थस्य किमपि रूपं न स्यात्। यदि द्रव्यभिन्ना शक्तय: स्वीक्रियन्ते तर्हि विभिन्नकार्याणां निष्पत्तिर्न स्यात्। तस्माद् भेदाभेदेन शक्तीनामानन्त्यं तथापि तेषां भेदानां कर्तृकर्मादि षट्सु भेदेष्वन्तर्भाव: । द्रव्यभेदेन भिन्ना शक्ति: । तदुक्तं वाक्यपदीयस्य तृतीयकाण्डे साधनसमुद्देशे -

**द्रव्याकारादिभेदेन ताश्चापरिमिता इव।**
**दृश्यन्ते तत्त्वमासां तु षटंशक्तीर्नातिवर्तते।।३**

यथा देशकालभेदेन एकैव दहनशक्ति: अग्निवैयित्र्यमुपपादयति वस्तुन: स्वरूपं च न भिनत्ति तथैव कारकण्वपि। शक्तिनिमित्तभेदात् षोढात्वमापन्ना सति साधनमुच्यते। तदुक्तं वाक्यपदीयस्य साधनसमुद्देशे-

**निमित्तभेदादेकैव शक्ति: भिन्न प्रतीयते।**
**षोढा कर्तृत्वमेवाहुस्तत्प्रवृत्तेर्निबन्धनम् ।। ४**

कर्तृत्वमेव इष्टतमत्वादिना षोढावस्थितं तच्च कर्तृत्वं शक्तिभेदस्य प्रवृत्ते: कारकचक्रव्यवहारस्य च निमित्तभूतम्। अष्टाध्यायां कर्तृसंज्ञाविधायकानि सूत्राणि यथा ''स्वतन्त्र: कर्ता५, तत्प्रयोजको हेतुश्च६, कर्मवत् कर्मणा तुल्यक्रिय:७,

णेरणौ यत्कर्म स चेत् स कर्त्ताऽनाध्याने८'' इति दृग्गोचरी भवन्ति।

स्वतन्त्रः कर्त्ता इत्यस्मिन् सूत्रे यस्य स्वं तन्त्रं भवति स स्वतन्त्र इत्युच्यते। न च स्वतन्त्रशब्दः तन्तुवाये वर्तते तर्हि तन्तुवाय एव कर्ता स्यात् तद्भिन्नस्य सर्वस्यापि शक्तिमद्द्रव्यस्य कर्तृत्वं न स्यादिति चेन्मैबम्। तन्त्रशब्दस्यानेकार्थत्वात्। तत्रहि तन्त्रशब्दः वितानार्थे प्रधानार्थे च वर्तते। तदुक्तं भाष्यकृता - अयं तन्त्रशब्दः अस्त्येव बिताने वर्तते। तद्यथा - स्वतन्त्रोऽसौ ब्राह्मण इत्युच्यते स्वप्रधान इति गम्यते। तद्यथा प्राधान्ये वर्तते तन्त्रशब्दः तस्येदं ग्रहणम्। ''स्वतन्त्रः कर्त्ता''९। तदित्थं स्वतन्त्रशब्दस्य अर्थद्वयं भगवता स्वीकृतम्। अत्र किमर्थकस्य तन्त्रशब्दस्य ग्रहणं कर्तव्यमिति आशङ्का जायते। वितानर्थकस्य तन्त्रशब्दस्य स्वतन्त्रः कर्त्ता सूत्रे ग्रहणे तु तद्भिन्नस्य कर्तृत्वं न स्यादतः अत्र प्राधान्यर्थकस्य तन्त्रशब्दस्य ग्रहणं कर्तव्यम्। एवं स्वतन्त्रः कर्त्ता इत्यस्मिन् सूत्र स्वतन्त्रपदेन स्वप्रधान इत्यर्थः। इमम् अर्थ भगवान् भाष्यकारो पतञ्जलिः स्वीकृतवान्। अर्थात् प्रकृतवाक्योपात्तक्रियायां स्वातन्त्रेण विविक्षितोऽर्थः कर्ता उच्यते तद्वाचकश्च शब्दः कर्तृसंज्ञको भवति।

न चैवं स्वतन्त्रस्य कर्तृत्वस्वीकारे प्रयोजितस्य व्यापारश्रयस्य कर्तृसंज्ञा न स्यात्। पाचयति ओदनं देवदत्तेन इत्यत्र यद्वा हरिः वेदं विधिम् अध्यापयदित्यादिवाक्येषु देवदत्तादीनां कर्तृसंज्ञा नस्यादिति वाच्यम्। प्रयोजकेन यद्वा प्रेरकेण प्रयोजितस्य यद्वा प्रेरितस्य कर्तुः क्रियायां स्वातन्त्रात्। केनचित्प्रयोजितः कर्त्ता क्रियां करोति अथवा न करोति। यथा देवदत्तः अध्यापयति। देवदत्तः यज्ञदत्तं पठितुं प्रेरयति। देवदत्तश्च न पठति इच्छायाः अभावात्। अत एव स्वतन्त्रः कर्ता इत्यत्र वार्तिककृता उक्तम्। तद्यथा - नाऽकुर्वतीति चेत्स्वतन्त्रोऽकुर्वन्निति। साधीयो ज्ञापकं भवति। प्रेषिते च किलायंक्रियां व अक्रियां दृष्ट्वाऽध्युस्यति। कुर्वन् स्वतन्त्रोऽकुर्वन्निति एत्वं च ''हेतुमति चेति''१० सूत्रे प्रयोजकव्यापारे प्रेषणादौ वाच्ये च धातोर्णिचिप्रत्यये कृते सति प्रयोजितस्यापि यद्वा प्रेरितस्यापि शक्तिमद्द्रव्यस्य कर्तृसंज्ञा स्वतन्त्रः कर्ता इत्येतदरिक्तमुपसंख्यानं नावश्यकम्।

ननु क्रियायां स्वातन्त्रेण विवक्षितोऽर्थः कर्ता चेत्कारणादीनामपि स्वव्यापारे स्वातन्त्र्यात् कर्तृकारणयोः न कश्चिद् विशेषः इति चेन्न। करणस्य कर्तृरधिनत्वात् उक्तम् कर्तृपरतन्त्राणि कर्तृविनियोगादेव करणादीनां स्वातन्त्र्यम्। तदुक्तं वाक्यपदीयस्य साधनसमुद्देशे स्वतन्त्रः कर्तेति सूत्रोक्तकर्तुनिरूपणावसरे। तद्यथा-

**प्रागान्यतः शक्तिलाभान्यगभावापादनादपि।**
**तदधीनप्रवृत्तित्वात् प्रवृत्तानां निबर्तनात्।।**

**अदृष्टत्वत्प्रतिनिधेः प्रबिवेके च दर्शनात्।**
**आरादप्युपकरित्वे स्वातन्त्र्यं कर्तृरुच्यते ।।११।।**

अन्यत्र करणादिप्रवृत्तेः प्राक्पूर्वकं शक्तिलाभादर्थात् करणादिप्रवृत्तिं विनैव कर्तरि स्वतः कर्त्तृत्वशक्तिर्भवति। न्यग्भावापादानात् आत्माधीनताप्रतिपादनात् अर्थात् कर्ता फलार्थमीहमानः स्वयं व्यापारवान् भवति। तदधीनप्रवृत्तित्वादितिपदस्य व्युत्पत्तिः तदधीनात् नाम कत्राधीनात् प्रवृत्तियेषां तानि तस्माच्च भावार्थे त्व प्रत्यये तदधीनप्रवृत्तित्वमिति निष्पद्यते। अर्थात् करणादीनां प्रवृत्ति कर्त्रधीना भवति। तस्मात् कारणात् कर्ता करणादिभिन्नो भवति प्रवृत्तानां निवर्तनात्। अदृष्टत्वात् प्रतिनिधेः करणादीनां कर्त्रन्तरं कश्चित् प्रतिनिधिः न दृश्यते। तस्मात् हेतोः

प्रविवेके च दर्शनात् कारकान्तराणामभावे कर्ता दृश्यते। तद्यथा- अस्ति भवति विद्यते इत्यादौ। आरादप्युपकारित्वे स्वातन्त्र्यं कर्तुः अर्थात् क्रियासिद्धौ करणस्य विप्रकृष्टोपकारकत्वेऽपि करणं प्राधान्यनिबन्धनमुच्यते इति तस्यैव प्राधान्यस्य कर्तृसंज्ञा। ननु करणादेः स्वव्यापारे स्वतन्त्रस्यापि इत्यर्थः। एवमन्यतः प्राक् शक्तिलाभात्, न्यग्भावापादानात् इत्यादिहेतुकल्पनेन कर्तृः करणद्यपेक्षया प्राधान्ये भवति। एतदेव तथ्यं ''कारके'' १२ इति सूत्रस्य भाष्ये सर्वेषु साधनेषु सन्निहितेषु कर्ता प्रवर्तयिता भवति इत्येवं प्रतिपादितम्। तदधीनप्रवृत्तित्वादित्यनेन कर्तृः साक्षात्प्रवर्तकत्वं व्याख्यातम्। नन्वेवंविधधर्मकलापाभावात् अचेतनेषु कर्तृता न भवतीति चेन्मैवान्। अन्यथा अग्निर्दहति, एधाः पचन्ति, स्थाली पचति इत्यादौ च कर्तृत्वं न स्यात्। अस्मिन् हि व्याकरणे शब्दार्थो हि न यस्त्वर्थः। एतदेव तथ्यं श्रीमद्भर्तृहरिणा वाक्यपदीयस्य साधनसमुद्देशे प्रतिपादितम्। तद्यथा -

**धर्मैरभ्युदितैः शब्दे नियमो न तु वस्तुनि ।**
**कर्तृधर्मविवक्षयां शब्दात् कर्ता प्रतीयते ।। १२**

अभ्युदितैः धर्मैः प्रागुक्तैः एतैः प्रवर्तयितृत्वादिलक्षणैः धर्मैः शब्दे नियमः न तु वस्तुनि नियमः क्रियते। कर्तृः धर्मविवक्षायां तदधीनप्रवृत्तत्त्वादिधर्मविवक्षायां शब्दात् कर्ता प्रतीयते। अतः व्याकरणान्तरे ''अर्थो कर्ता तथायुक्तस्य इति लक्षणद्वयं चेतनाचेतनसाधारणं यत् कर्तृलक्षणं प्रणीतं तत् समीचीनं नास्ति''। तेन वैयाकरणसिरोमणिना भट्टोजिदीक्षितेन प्रदत्तं कर्तृलक्षणं क्रियायां स्वातन्त्रेण विवक्षितोऽर्थः कर्ता स्यात्।

**पादटिप्पणी -**

१. अष्टाध्यायी पा.सू - ३-१-१३३
२. अष्टाध्यायी पा.सू - १-४-२३
३. वाक्यपदीयम्, साधनसमुद्देश - श्लो.सं. ३६
४. वाक्यपदीयम्, साधनसमुद्देशः - श्लो.सं ३७
५. अष्टाध्यायी पा.सू - १-४-५५
६. अष्टाध्यायी पा.सू - ३-१-१३३
७. अष्टाध्यायी पा.सू - ३-१-८७
८. अष्टाध्यायी पा.सू - २-३-६७
९. अष्टाध्यायी पा.सू - १-४-५४
१०. अष्टाध्यायी पा.सू - ३-१-२६
११. वाक्यपदीयम्, साधनसमुद्देशः - श्लो. सं. १०१, १०२
१२. वाक्यपदीयम्, साधनसमुद्देशः - श्लो.सं. १०३

सहायकाचार्यः, नव्यव्याकरणविभागः
राष्ट्रियसंस्कृतसंस्थानम्, श्रीसदाशिवपरिसरः, पुरी

# निपात एकाजनाङ्सूत्रविमर्शः

डॉ युधिष्ठिरसाहुः

श्रीमत्पाणिनिप्रणीताष्टाध्यायां निपातसंज्ञाविधायकसूत्राणां अनितरसाधारणं स्थानं महत्वञ्च वरीवर्ति। अन्यथा प्राप्ते अन्यथाकरणं निपातलक्षणम्। एतन्निपातलक्षणलक्षितसाधुशब्दान्तर्गतनिपातानामपि द्योत्यर्थबोधकत्वात् तेषामर्थवत्सूत्रेण प्रातिपादिकसंज्ञायाम्, ततस्सुपि, तस्यविभक्तिकार्ये च कृते निपातानामपि स्वतन्त्रेण प्रयोगार्हत्वात् वैदिकलौकिकसाधुशब्देषु एकाज्त्वनां निपातानामपि प्रयोगदर्शनात् तेषाम् एकाच्त्वतां निपातानामपि प्रयोगो बोभवतीति। अतएव श्रीकृष्णायजुर्वेदीय तैत्तिरीयसंहितायाम्-

''का.उ.ते शमिता कविः ''(सप्तमकाण्डस्य चतुर्थाध्याये) इति मन्त्रस्य साधुत्वान्वाख्यानं सङ्गच्छते। लौकिकोदाहरणेषु अपि एतादृशैकाज्त्वतनिपाताः दृश्यन्ते इत्यभिप्रायेणैव वैयाकरणसिद्धान्तकौमुद्यां प्रकृतिभावप्रकारणे 'आ एवं नु मन्यसे' इति मन्त्रे आकारस्यैकाज्रूपस्य प्रयोगे भट्टोजीदीक्षितेनाकारि। एतत्सर्वं प्रामाणिकं वृत्तं मनसि निधायं 'निपात एकजनाङ्'[१] इति सूत्रार्थतत्वमहमनुसन्दधामि।

तथाहि अत्र सूत्रे निपातपदाभावे 'एकाच्' इत्यस्य प्रगृह्यसंज्ञायां चकार + अत्र इत्यस्य 'अकः सर्वेण दीर्घः'[२] इति सूत्रेण पूर्वापरयोरकारयोः दीर्घादेशः न प्रवर्त्तते। तथाहि कृधातोः लिटि, तिपि, णलि, द्वित्वे अभ्यासकार्ये हलादिशेषे (च + कार् + अ(णल्) इति जाते एकस्य अचो अर्थात् णल्स्थितस्य अकारस्य प्रगृह्यसंज्ञाकरणे 'प्लुतप्रगृह्याअचि नित्यम्'[३] इति प्रकृतिभावे तदनन्तरं विद्यमानः अकारस्य दीर्घादेशः न प्रवर्त्तते। परन्तु सूत्रे निपातपदप्रयोगात् णल्स्थितस्याकारस्य प्रगृह्यसंज्ञाभावात् चकार + अत्र चकारात्र इत्यत्र दीर्घादेशः प्रवर्त्तते ।

ननु णल् प्रत्ययस्य शास्त्रकल्पितार्थवत्वाद् ''अर्थवत् ग्रहणपरिभाषया'' अर्थात् 'वर्णेनापि अनर्थकेन न भवितव्यम्' इति महाभाष्यवचनेन शास्त्रीयोऽर्थः अन्वयव्यतिरेकेण स्वीक्रियते। यस्य सत्वे योऽर्थः प्रतीयते सोऽन्वयः। यस्याभावे योऽर्थो न प्रतीयते स व्यतिरेक इति। अत्र विद्यमानो णलोऽकारस्य शास्त्रीयार्थग्रहणात् अर्थवत्वात् वाचकत्वात् द्योतकत्वाभावात् न प्रगृह्यसंज्ञा। तेन अत्रोदाहरणे निपातसंज्ञायाः अभावात् दीर्घादेशः न प्रवर्त्तते।

'निपात एकाजनाङ्' इति सूत्रे एकाच्' इत्यत्र 'एकश्चासौ अच् च' विग्रहवाक्ये कर्मधारयसमासाश्रयणे अवयवार्थे अन्तरङ्गत्वनिरूप्यते। एवम् 'एकः अच् यस्य' इति विग्रहवाक्ये बहुव्रीहिसमासाश्रयणे अन्यपदार्थस्य प्राधान्यात् बहिरङ्गत्वं विद्यते। अतः 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया अन्तरङ्गत्वात् कर्मधारयसमासेव स्वीकरणीयः। तेन वर्तिपदार्थे - समासविग्रहवाक्यघटकपदस्यार्थः प्रधानम्। अतः अत्र 'एकाच्' इत्यत्र कर्मधारयो समासः स्वीकरणीयः।

एवं 'वि + अहरति + मृगः' इत्यत्र एकाच इत्यस्य बहुव्रीहिसमासस्वीकारे 'वि' इत्यत्र 'एकः अच् यस्य' इति बहुव्रीहिसमासदृष्ट्या वि इत्यस्य प्रगृह्यसंज्ञायां' व्याहरति मृगः इति प्रयोगस्यानुपपत्तिः जायते। अतः हलादिशेषः इति सूत्रारम्भसामर्थ्यात् 'एकाचो द्वे प्रथमस्य' इति सूत्रे 'एकाच्' इति पदे 'निपात एकाजनाङ्' इति सूत्रेण 'प्र' इत्यस्य प्रगृह्यसंज्ञा न प्रवर्त्तते तत्र कर्मधारयसमासात्। अतः कौमुद्यामुक्तम् - एकोऽच् निपात आङ्वर्ज' इति। 'अनाङ्' इत्यत्र पर्युदासनञ् विद्यते। यद्यत्र प्रसज्यप्रतिषेधो नञ् स्वीक्रियते तर्हि क्रियाध्याहारः, वाक्यभेदः, असमर्थसमासकल्पनादि

दोषत्रयेण गौरवं जायते। एतदर्थं 'एकाज्नाङ्' इति सूतं नैव लिखितम्। न च न आङ् = नाङ् इति नैव सूत्रितम्।

पर्युदासनञ् स्वीकारे 'अकार: वासुदेव: स्यात्। वासुदेववाचक अशब्दस्य पञ्चम्यन्ते आत् इति जाते तस्य अभिविध्यर्थे 'आङ्मर्यादाभिविध्यो:'[४] इति सूत्रेण आङा सह अव्ययीभावसमासे विभक्तिलोपे 'आ अ' इति सवर्णदीर्घे 'आत' इति जाते 'अव्ययीभावश्च'[५] इति अव्ययीभावसमासस्य नपुंसकलिङ्ग 'ह्रस्वो नपुंसके प्रातिपदिकस्य'[६] इति सूत्रेण ह्रस्वे 'अ' इति जाते सु आगमे 'नाव्ययीभावादतोऽम्पञ्चम्या:'[७] इति सूत्रेण अमादेशे 'अ अम्' इति जाते 'पूर्वान्तवत्भावेन निपातत्वेन प्रगृह्यसंज्ञायाम् 'अमि पूर्व:' इति सूत्रेण पूर्वरूपाभावे 'अम्' इति स्वस्य निष्पत्तिर्नजायते। शेखरकारेणोक्तम् यदि 'अम्' इति प्रयोग: सत्याभिधानं ननाम प्रामाणिकम् तर्हि तथैव पूर्वान्तवत्भावेन निपातत्वं स्वीक्रियते। तथैव आङ्त्वस्य अतिदेशेन पूर्वान्तवद्भावं भवितुमर्हति। अत: अतिदेश्यमान धर्म: आङ्त्वं, तद्विरुद्ध: स्वाश्रयधर्म: आङ्त्वं, तद्विरुद्ध: स्वाश्रयधर्म: स्वत:सिद्ध आङ्भिन्नत्वं, तत्प्रयुक्तकार्यं प्रगृह्यसंज्ञा तस्य निवृत्ति: अतिदेशस्य स्वभावर्विसद्धत्वात्, अत्र प्रगृह्यसंज्ञा न प्रवर्त्तते। एतत् तु स्थानिवत् सूत्रे भाष्ये उक्तम्।

'ओत्'[८] इति सूत्रभाष्यात् प्रतीयते 'अनाङ्' पदे प्रसज्यनञ् विद्यते इति शङ्का उत्पद्यते। यत: ओ आयातं मरुत:' इति वाक्ये आ + उ इत्यस्य मेलने 'ओ' इति उत्पद्यते। तत्र पूर्वान्तवद्भावेन आङ्त्वस्य अतिदेशे जाते ''अनाङ्' इत्यनेन प्रगृह्यसंज्ञा निषिध्यते। तदा भाष्यकार: 'ओत्' सूत्रस्य उद्देश्यंप्रतिपादनार्थं 'अनाङ् इति प्रतिषिद्धार्थोऽयमारम्भ:' इति प्रतिपादितम्। अर्थात् अनाङ् इत्यत्र प्रगृह्यसंज्ञा अप्राप्तिस्थले 'ओत्' इति सूत्रारम्भ:। नागेशानुसारेण तु 'आ ओ इति प्रतिषिद्धार्थोऽयमारम्भ: इति भाष्यकार वचनं तु प्रसज्यप्रतिषेधनञ्पक्षे न भवति। अपि तु 'अनाङ्' इत्यत्र पर्युदासनञ् विद्यते। एवं यद्यपि पर्युदासपक्षे प्रतिषेध: न भवति। तथापि गत्यागत्य नियमेन आङ्भिन्नत्वस्य प्रगृह्यस्य प्रतिषेधे 'आङ्' इत्यस्य प्रगृह्यसंज्ञा निषिध्यते तदेव गम्यप्रतिषेधमाधारिकृत्य भाष्यकारस्य 'आ उ ओ प्रतिसिद्धार्थोऽयमारम्भ:' इति वचनम् आरब्धम्। अत: पर्युदासस्य अनुपपत्ति: इति न च वाच्यम्। अनाङ् इत्यत्र पर्युदास नञ् स्वीकारादेव आङ्भिन्न अङ्सदशस्यै ग्रहणम्। तेन आङ्सदृशस्य निपातत्वेन एकात्वेन च लब्ध:। अत: स पुन: सूत्रे निपात एकाच्ग्रहणं स्पष्टप्रतिपत्यर्थम्। सूत्रे एकग्रहणस्य फलं तु - यथैव स्वाङ्गसमुदाये स्वाङ्गत्वस्याभावं, अच्समुदाये अच्त्वस्याऽभाव:। तथैव अत्रापि 'अच्' इत्यस्य प्रगृह्यसंज्ञाप्राप्ते अच्समुदायस्य प्रगृह्यसंज्ञाऽभावे सूत्रे एकग्रहणमनावश्यकमिति चेन्न। शेखरकाराणां मते 'वर्णग्रहणे जातिग्रहणम्' इति परिभाषया यत्र एकस्य शब्दस्य स्थाने एक: अच्वर्णस्य ग्रहणं भवति। तत्र अच्त्वावच्छिन्नानाम् अष्टादशभेदानां ग्रहणं भवति। अत: अच् समुदायरूपि य: अच्, तस्य प्रगृह्यसंज्ञा वारणार्थं सूत्रे एकग्रहणम् आवश्यकम्। 'वर्णग्रहणे जातिग्रहणमिति' परिभाषास्वीकारादेव 'घिप्स्यति' इति प्रयोगस्य सिद्धि: जायते। तथाहि- दम्भ्धातो: इच्छार्थे सन्प्रत्यये 'सनीवन्तर्धभ्रस्जदम्भुं श्रिस्वृयूर्णुभरज्ञपिसनाम्'[९] इति सूत्रेण विकल्पेन इडागमे 'दम्भ इच्च' इति सूत्रेण इत्वे, द्वित्वे 'अत्र लोपोऽभ्यासस्य'[१०] इति सूत्रेण अभ्यासस्य लोपे दिम्भ् + स् + ति' इति स्थिते 'हलन्ताच्च'[११] इति सूत्रेण 'सन्' इत्यस्य कित्वं प्रवर्त्तते। वस्तुतं अत्र जात्यवच्छिन्न ग्रहणाभावे कित्वं न प्रवर्त्तते। तथाहि सन् प्रत्ययस्य समीपे इक: अविद्यमानत्वेऽपि एकग्रहणेन ज्ञापितम् - वर्णग्रहणे जातिग्रहणमिति। तेन दि + दम्भ् + स् + ति'' इति स्थिते इक् समीपे हल् इत्युक्ते हल्त्वावच्छिन्न मकारभकारयो: ग्रहणं भवति। अत: इकारसमीपे सन्विद्यमात्वात् कित्वात् न लोपे, भव्यावे, चर्त्वे घिप्सति' इति रूपं सिद्ध्यति इति भाष्ये स्पष्टम्। एकग्रहणं 'वर्णग्रहणे जातिग्रहणार्धम्' इत्यत्र जातिग्रहणे किमपि कार्यं न प्रवर्त्तते। अत: कथं जातिग्रहणमिति चेत् - उपात्तजात्याश्रय एकस्य

अथवा अनेकव्यक्ति ग्रहणार्थम्। तेन तितउ शब्दैकदेशस्य 'अ उ' इत्यस्यानुकरणे 'अ उ अकोरत्' इत्यवस्थायाम् 'अनुकरणं चानिति परम्' इति सूत्रेण 'अ उ' इत्यस्य निपातसंज्ञाप्राप्तेऽपि एकवर्णाभावात् प्रगृह्यं न प्रवर्त्तते। तदेव एकग्रहणस्य फलम्।

'आ' इति निपातस्य पक्षद्वयं वर्त्तते। आ अङ् चेति तत्र कुत्र ङित् भवति कुत्र अङित्भवति इति प्रातिपादनार्थं 'वाक्यस्मरणयोरङित्' इति दीक्षितेनोक्तम्। अर्थात् वाक्य एवं स्मरणे यः आकारः सः ' अङित्' यथा 'आ एवं नु मन्यसे' अर्थात् 'पूर्वमेवं नामंस्थाः, सम्प्रत्ति एवं मन्यसे'' 'इत्यत्र आ इत्यस्य ङित्भिन्नार्थत्वात् प्रगृह्यसंज्ञायां प्रकृतिभावः जायते। अतः उक्तम् - ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः।

एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ।।

अन्यत्र ङित् इति विवेकः

वाक्यशब्देन स्वार्थगतं नाम वाक्यार्थगतमित्यर्थः अभिमतम् स्मारणम् - विस्मृतविषये स्मृतिविषयता भवति स्मरणम्।

**पादटिप्पणी -**

१. अष्टाध्यायी - १/१/१४
२. अष्टाध्यायी - ६/१/१०२
३. अष्टाध्यायी - ६/१/१२५
४. अष्टाध्यायी - २/१/१३
५. अष्टाध्यायी - २/१/०४१
६. अष्टाध्यायी - २/२/४७
७. अष्टाध्यायी - २/४/८३
८. अष्टाध्यायी - १/१/२५
९. अष्टाध्यायी - ७/२/४९
१०. अष्टाध्यायी - ७/४/४८
११. अष्टाध्यायी - १/२/१०

**संस्कृतविभागः**
**रेभेन्सा विश्वविद्यालयः, कटक**

# पाणिनावनुनासिकसंज्ञा

**डॉ.अजयकुमारदाशः**

**प्राक्कथनम् –**

मुखं व्याकरणं स्मृतम् इति शिक्षावचनानुसारं व्याकरणस्य स्थानं सर्वोच्चं स्वीक्रियते शास्त्रेषु शास्त्रान्तरेषु च विद्वद्भिः । महर्षिपाणिनिमुनिप्रणीतस्याष्टाध्यायीग्रन्थरत्नस्यादिमाध्यायस्याष्टमसूत्रं वर्तते मुखनासिकावचनोऽनुनासिकः । षड्विधेषु सप्तविधेषु वा सूत्रेषु संज्ञासूत्रमिदम् । उच्यते असाविति वचनः । मुखसहिता नासिका मुखनासिका इत्यत्र मध्यपदलोपिसमासः । तया (मुखसहितनासिकया) वचनः (उच्चारितो वर्णः) स मुखनासिकावचनः । अत्र सूत्रे मुखनासिकावचनः इति प्रथमान्तम्, अनुनासिकः इति प्रथमान्तम् । अतः द्विपदमिदं सूत्रम् । यद्यत्र द्वन्द्वसमासः स्वीक्रियते तर्हि एवं विग्रहो भवति मुखञ्च नासिका च तयोः समाहारः मुखनासिकम् । द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् इत्यनेन समाहारत्वात् नपुंसकमेकवचनम् । ईषद्वचनम् आवचनम्। मुखनासिकम् आवचनं यस्य स मुखनासिकावचनः, अत्र द्वन्द्वगर्भो बहुव्रीहिः । अतः सूत्रस्यार्थः मुखसहितनासिकया उच्चार्यमाणो वर्णः अनुनासिकसंज्ञः स्यात् ।

**विषयः -**

नासिकायां निर्गतः अथवा नासिकयोच्चारितः इत्यस्मात्कारणात् एषा संज्ञा अन्वर्थसंज्ञा भवति । वास्तवतया वर्णानामुच्चारणं मुखतो जायते । परन्तु ङ् ञ् ण् न् म् एते वर्णाः उच्चारणकाले नासिकायाः साहाय्यं स्वीकुर्वन्ति । नासिकासाहाय्येन मुखसहितोच्चार्यमाणवर्णः एव अनुनासिकवर्णो भवति । यो हि वर्णः अनुनासिको न भवतिस अननुनासिकः अथवा निरनुनासिकः । ह्रस्व-दीर्घ-प्लुत-उदातदत-अनुदात्त-स्वरित-अनुनासिकादिधर्माः अचि विद्यन्ते । परन्तु अपवादरूपेण ङ् ञ् ण् न् म् एते वर्णाः हलः अपि अनुनासिकरूपेण प्रतीयन्ते । तथैव यँ वँ लँ एते वर्णाः अनुनासिकाः सन्ति परन्तु य् व् ल् इत्येते वर्णाः निरनुनासिकाः उच्यन्ते। यत्रानुनासिकस्य व्यवहारो जायते तत्र अचः तथा ङ् ञ् ण् न् म् एते वर्णाः अनुनासिकाः बोध्यन्ते ।

प्रकृतसूत्रे मुखपदग्रहणं व्यर्थं भवति । कारणं मुखं विहाय कस्यापि वर्णस्योच्चारणं सम्भवं न । तत्र समाधानं केवलं अनुस्वारस्योच्चारणं नासिकातो जायते । तदानीं मुखस्यावश्यकता नानुभूयते । यदि प्रकृतसूत्रे मुखपदस्यावस्थानं न स्यात् तर्हि केवलम् अनुस्वारस्यैवानुनासिकसंज्ञा भविष्यति, परन्तु अन्येषां (अँ आँ ण्) इत्यादीनां न । पुनः यदि सूत्रे नासिकापदस्यावस्थानं न जायते तर्हि मुखतः उच्चार्यमाणानां (क् च् ट् त् प्) वर्णानामपि अनुनासिकसंज्ञा स्यात्। अतः सूत्रकारेण सूत्रनिर्माणावसरे यत्पदद्वयमुपन्यस्तं तदेवसमीचीनम् ।

खनन्ति अन्नादिकमनेनेति मुखम् आस्यम् । नासते शब्दं करोति अनया सा नासिका उच्यते उच्चार्ययते इति वचनः। नासिकामनुगतः अथवा नासिकाम् अनु अथवा पश्चात्प्राप्तः अनुनासिकः । यद्यपि वर्णानामुच्चारणं मुखतो जायते तथापि नासिकासाहाय्येन अनुनासिकानामुच्चारणं भवति । ते वर्णाः यथा - ङ् ञ् ण् न् म् अँ इँ उँ ऋँ लृँ एँ ऐँ ओँ औँ अं यँ् वँ् लँ् इति।

तदित्थम् अ इ उऋ एषां वर्णानां प्रत्येकमष्टादशभेदाः । लृवर्णस्य द्वादश, तस्य दीर्घाभावात् । एचामपि द्वादश, तेषां ह्रस्वाभावात् ।

**शेखरकाराभिमतम् -**

उच्यते असौ वचनः । बाहुलकात् अत्र कर्मणि ल्युट् । मुखसहिता नासिका इति विग्रहः । वस्तुतस्तु मुखसहितया नासिकयेति न विग्रहः , किन्तु मुखद्वितीयया नासिकयेति । अन्यथोत्तरपदलोपस्य नित्यत्वेन मुखसहितनासिकयेति मुलस्यासङ्गत्यापत्तेरिति साम्प्रदायिकाः । अन्ये तु मुखपदं मुखसहिते लाक्षणिकं सूत्रे,शाकपार्थिवादौ पाठे न मानं नापि प्रयो तया वचन इति, साधनं कृत (भा० इ०)इति समासः , तदाह मुखसहितेत्यादि । मुखेति किम् , यमानुस्वाराणामेव प्रसज्यते। एवञ्च आङोऽनुनासिकः (पा.सू. ६/१/१२६) इति यत्रानुस्वारः स्यात् । नासिकेति किम् ? शक्ता इत्यादौ अनुदात्तोपदेश (६/४/६७) इत्यादिना कलोपो मा भूत् । अष्टादशेति । यद्यपीदं न व्यक्तिपक्षे व्यक्तीनामानन्त्यात्, तथाप्यष्टादशधर्मवत्त्वमकारजातीयादेरित्यर्थः । ह्रस्वत्वादीनां तत्तसत्समानाधिकरणोदात्तत्वानुनासिकत्वादीनाञ्च भेदमाश्रित्येदं बोद्धव्यम् । एवमग्रेऽपि । लृवर्णस्येति । विवृतस्येत्यर्थः । तेन लृति लृवा (का० वा०) इति विधेयस्येषत्पृष्टस्य दीर्घत्वेऽपि न क्षतिः । दीर्घाभावादिति । अत एव तुल्यास्यप्रयत्नं सवर्णम् (१/१/९) सूत्रे भाष्ये लृति सवर्णे (का०वा०) इत्यनेन पक्षे द्विलकाराभावे अकः सवर्णे दीर्घः (६/१/१०१) इति दीर्घत्वे होतॄकारः इति ॠकारघटितप्रयोगः सङ्गच्छते । ह्रस्वाभावादिति । इदम् एओङ् (मा.सू.३) इत्यादौ भाष्ये स्पष्टम् । गानरोदनादौ चतुर्मात्राऽर्धमात्रादीनामुपलम्भेऽपि शास्त्रीयकार्ये उपयोगाभावाल्लोके प्रयोगेष्वप्रयोगाच्चोक्ताः । अत एवानुदात्ततरस्यनुक्तिः । एकश्रुतेः स्वरान्तरत्वे इदमुपलक्षणम् । तया लोकेऽपि सत्त्वात् ।

**मनोरमाग्रन्थे -**

ग्रन्थकारेणा मुखनासिकावचनोऽनुनासिकः इति सूत्रसन्दर्भे स्वीयं अधिकं एतदेव वक्तव्यम् उपन्यस्तं यत् - मुखं च नासिका चेति विग्रहे प्राण्यङ्गत्वादेकवद्भावे मुखनासिकमिति स्यात् । अत आह - मुखसहितेति ।

**भाष्यकाराशयः -**

भाष्यकारेण मुखनासिकावचनोऽनुनासिकः इति सूत्रभाष्यावसरे कथितं यत् - किमिदं मुखनासिकावचन इति ? मुखं च नासिका मुखनासिकम् । मुखनासिकं वचनमस्य सोऽयं मुखनासिकावचनः । यद्येवं मुखनासिका वचन इति प्राप्नोति । निपातनाद्दीर्घत्वं भविष्यति । अथवा मुखनासिकावचनमस्य सोऽयं मुखनासिकावचनः । अत किमिदमावचनमिति । ईषद्वचनमावचनमिति । किंचिन्मुखवचनं किंचिन्नासिकावचनम् । मुखद्वितीया वा नासिका वचनमस्य सोऽयं मुखनासिकावचनः । मुखोपसंहिता वा नासिका वचनमस्य सोऽयं मुखनासुकावचनः । अथ मुखग्रहणं किमर्थम् ? नासिकावचनोऽनुनासिकः इतीयत्युच्यमाने यमानुस्वराणामेव प्रसज्येत । मुखग्रहणे पुनः क्रियमाणे न दोषो भवति । अथ नासिकाग्रहणं किमर्थम् ? मुखवचनोऽनुनासिकः इत्युच्यमाने कचटतपानामेव प्रसज्येत । नासिकाग्रहणे पुनः क्रियमाणे न दोषो भवति । मुखग्रहणशक्यमकर्तुम् । केनेदानीमुभयवचनानां भविष्यति ? प्रासादवासिन्यायेन । तद्यथा - केचित्प्रासादवासिनः, केचिद्भूमिवासिनः, केचिदुभयवासिनः । तत्र ये प्रासादवासिनो गृह्यन्ते ते प्रासादवासिग्रहणेन । ये भूमिवासिनो गृह्यन्ते ते भूमिवासिग्रहणेन । ये तूभयवासिनो गृह्यन्त एव ते प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च । एवमिहापि केचिन्मुखवचनाः, केचिन्नासिकावचनाः, केचिदुभयवचनाः । तत्र ये मुखवचना गृह्यन्ते, ते मुखग्रहणेन । ये नासिकावचना गृह्यन्ते ते नासिकाग्रहणेन । ये उभयवचना गृह्यन्त एव ते मुखग्रहणेन, नासिकाग्रहणेन च ।

भवेदुभयवचनानां सिद्धम् । यमानुस्वाराणामपि प्राप्नोति । नैव दोषो न प्रयोजनम् । इतरेतराश्रयं तु भवति । का इतरेतराश्रयता ? सतोऽनुनासिकास्यसंज्ञया भवितव्यम् । संज्ञया च नामाऽनुनासिको भाव्यते । तदितरेतराश्रयं

भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्प्यन्ते । अनुनासिकसंज्ञायामितरेतराश्रये उक्तम् । किमुक्तम् ? सिद्धं तु नित्यशब्दत्वादिति । नित्याः शब्दाः । नित्येषु सतोऽनुनासिकस्य संज्ञा क्रियते । न संज्ञयाऽनुनासिको भाव्यते । यदि तर्हि नित्याः शब्दाः किमर्थं शास्त्रम् ? निवर्तकं शास्त्रम्। कथम् ? आङस्मायविशेषेणोपदिष्टोऽनुनासिकः । तस्य सर्वत्रानुनासिकबुद्धिः प्रसक्ता । तत्रानेन निवृत्तिः क्रियते - छन्दस्यचि परत आङोऽनुनासिकस्य प्रसङ्गेऽनुनासिकः साधुर्भवति।

**प्रदीपाशयः -**

मुखनासिकावचनोऽनुनासिकः इति प्राण्यङ्गत्वात्समाहाद्वन्द्वे ह्रस्वत्वेन भाव्यम् । अवचनं नञ्समासाक्षयेणऽर्थो न सङ्गच्छते । इति प्रश्नः किमिदमिति ? निपातनादिति । प्रसङ्गेनाऽस्य लौकिकशब्दस्य साधुत्वं ज्ञाप्यते । निपातनानां च बाधकत्वान्मुखनासिकावचन इति न भाव्यम् । अबाधकत्वपक्षे तु भाव्यमेव । ईषद्वचनमिति । भागस्य मुखेनोच्चारणाद्भागस्य नासिकया । अस्मिन् पक्षे मुखनासिकावचन इत्यपि भवति । यो हीषदुच्यते स उच्यते एव । यथा ईषच्छुक्लोऽपि शुक्ल एव। मुखद्वितीयेति । मुखसहायेत्यर्तः। तत्र नासिकामुखसाहचर्यात् मुखशब्देनोच्यते । मुखं च तन्नासिका, वचनमस्येति ।

मुखोपसंहितेति । मुखस्य नासिकायाश्च यदन्तरालं स्थानान्तरमेवानिनासिकस्येति दर्शयति । तत्र सामीप्यान्मुखं च तन्नासिका चेत्युभाभ्यामन्तरालं व्यपदिश्यते । पदसंस्कारपक्षे तु मुखनासिकापदनिरपेक्षं वचनमित्येतत्पदं लिङ्गसर्वनामनपुंसकाश्रयेण संस्क्रियते । पश्चात्स्त्रीत्वस्य पदान्तरसम्बन्धेनप्रतीयमानत्वाद्बहिरङ्गत्वात् ङीप्रत्यो न भवति । यदा तु स्त्रीत्वाश्रयेण वचनीतिपदं व्युत्पाद्यते तदा मुखनासिकावचनीक इति बवत्येव । अत्र चानेकदर्शनम् । अनुनासिकस्य पूर्वः परो वा भागो मुखेनोच्चार्यते, भागो नासिकया, तत्र नासिकावचनभागानुरागवशान्मुखवचनोऽपि भागो नासिकावचन इव लक्ष्यते । यथा सँय्यन्तेत्यत्रानुनासिकयकारानुरागादकारोऽनुनासिक इव प्रतिभाति । अत्र च प्रसादवासिन्यायो नास्ति, भागस्यैव मुखेन नासिकया चोच्चारणान्न तु समग्रस्य । अन्येहां तु दर्शनं,-मुखनासिकान्तरालं स्थानान्तरमेवाऽनुनासिकस्येति। अत्रापि नास्ति प्रासादवासिन्यायः । यदा सर्व एव वर्णो मुखेनोच्चार्यते नासिकया च तदा प्रासादवासिन्यायेन भाष्यकारो मुखग्रहणं प्रत्याचष्टे । यथा भ्राष्ट्रेणोखया च पक्वः सूप उभाभ्यां व्यपदिश्यते ।

यमानुस्वाराणामेवेति । प्रासादवासिन्यायानवतारपक्षे इति बावः । तत्र विधिप्रदेशेषु यमानुस्वारा एवादेशाः स्युः । विड्वनोरनुनासिकस्यादित्यादिषु त्वनुवादप्रदेशेषु यमानुस्वाराणामसंभवादप्रतिपत्तिः स्यात् । कचटतपानामिति । पक्वमिति चकारलोपप्रसङ्गः। ओदनपगित्यत्राऽनुनासिकस्य क्विझलोः क्ङितीति दीर्घप्रसङ्गः । प्रासादवासिन्यायेनेति । अयं न्यायः क्रियाशब्देष्वेव, न रूढिशब्देषु । नैव दोष इति । अनुवादे तावद्यमानुस्वाराणामसंबव एव । विधिवप्यान्तरतम्यात् मुखवचनस्योभयवचनो भविष्यति न तु केवलो नासिकावचनः ।

**उद्योताशयः -**

प्राण्यङ्गत्वादिति । एतेनेतरेतरयोगद्वन्द्वे रूपसिद्धिरित्यपास्तम् । अर्थ इति । अभिमतोऽर्थ इत्यर्थः । सौत्रत्वादिति कुतो नोक्तमित्यतः आह - प्रसङ्गेनेति । अबाधकत्वेति । पक्षे त्वित्येनेनाबाधकत्वस्वीकतृवृत्तिमतमसङ्गतमित्युक्तम् । भाष्यकृदसमतरूपापत्तेः। बाधकान्येव निपातनानीति सर्वादिसूत्रे भाष्ये उक्तः । अस्मिन् पक्षे इति । आङ्रहितस्येति शेषः । वस्तुतः आद्यपक्षैकवाक्यतया आङ्रहितैतत्पदवचनपदाभ्यां समासस्याऽनभिधानमेवेत्याहुः । ननु भागस्य मुखाद्युच्चार्यत्वेन मुखनासिकं वचनमुच्चारणकरणं यस्य वर्णस्येत्यर्थको मुखनासिकावचन इति प्रयोगस्तत्राऽसएगतोऽत आह - यो हीति । सहायेति । अव्युत्पन्नो द्वितीयशब्दः सहायवाचीत्यर्थः। शाकपार्थिवत्वादित्वादुत्तरपदलोपे शब्दाऽनित्यत्वापत्तिरत आह - तत्रेति । परन्त्विदं चिन्त्यं, भाष्यकृतैवं रीत्या तदप्रत्याख्यानात् ।

मुखस्य चेति । उपशब्दसामर्थ्यादिति भावः । यद्यपि वचनशब्दे कर्मणि ल्युटि मुखनासिकेनावचनो मुखनासिकया वचन इति वा तत्पुरुषोऽपि वक्तुं शक्यः, तथापि कर्मणि तस्य बाहुलकलभ्यत्वात्करणे ल्युटा बहुव्रीहिरेवाश्रितो भाष्ये । तत्राऽन्त्ययोर्नासिकशब्दसमानाधिकरण्यात्स्त्रीत्वविशिष्टस्यैव करणत्वेन ल्युटि ङीपि नद्यृतश्चेति कबापत्तिः अत आह - पदसंस्कारेति । भागस्य मुखेनोच्चारणाननुभवादाह - तत्रेति । तस्यादित इति सूत्रस्वरसाद्वर्णानां सखण्डत्वमित्याशयः ।ये तु तत्तद्देशावच्छिन्नवाय्वभिघातस्य तत्तद्वर्णजनकत्वात् स्थानानां करणत्वमेव । स्थानव्यवहारस्तु वर्णजनकवायुसंयोगाधारत्वाद्वर्णाधारत्वमारोप्य । अत एवोत्तरसूत्रे भाष्ये अस्यन्त्यनेन वर्णानित्यास्यमिति करणे व्युत्पत्तिर्दर्शिता इति वदन्ति । तन्मते प्रासादवासिदृष्टान्ताऽङ्गतेराह - भ्राष्ट्रेण चेति । एतेन कण्ठादिकं तु स्तानं, नासिका तु करणमिति मन्दोक्तमपास्तम् । अत एवात्र सूत्रे हरिणा - स हि वर्णो न मुखेनैव, नापि नासिकयैव चात्मवृत्तिं लभते किं तु वायुनाऽनुपरतशक्तिनाऽन्यतरकरणमभिहऽत्यान्यतरकरणेऽभिहन्यमाने आत्मव्याक्तिं लभते ।

यमो - नाम वर्गपञ्चमे परे वर्गाद्यचतुष्टयान्यतमसदृशो वर्णः । आदितश्चत्वारो वर्णा इति विवरणेऽपि चतुः-शब्दस्य चतुः सदृशे लक्षणा बोध्या । अत एवाऽयोगवाहत्वप्रतिपादकहयवरट्सूत्रस्थभाष्याऽविरोधः । न्यायानवतारेति । कचटतपानामेवेत्येवकारो ऽप्यत्रैव पक्षे नासिकाया आस्यबाह्यत्वपक्षे च बोध्यः । अप्रतिपत्तिरिति । अत्र विड्वनोर्ञम इति वक्तुं शक्यम् । यरोऽनुनासिक इत्यत्र त्वप्रतिपत्तिः । तत्र ञमि ञम्वेत्युक्ते सकलेष्टाऽसिद्धेः ।

ननु प्रासादवासिन्यायेन मुखग्रहणप्रत्याख्यानवत् सूत्रमेव कुतो न प्रत्याख्यायते इत्यत आह - अयमिति । योगेन ह्युभयग्रहणं, स रूढिषु नास्तीत्यर्थः । अनुनासुकशब्दस्य च रूढिशब्दत्वम् । तस्य क्रियाशब्दत्वं तु वक्तुमशक्यम्, अनु पश्चान्नासिका व्याप्रियते यस्मिन्निति योगस्य ञमङणनेषु निरूपयितुमशक्यत्वात् । विनिगमनाविरहेण युगपदुभयोर्व्यावृत्तेः । एतेनाऽनु पश्चान्नासिकां गत इत्यर्थको नासिकामनुगत इति योगोऽपि परास्तः । यथाकथञ्चिद्योगोपपादने तु रूढिरेव फलितेति ।

एवं प्रकारेण शास्त्रान्तरेषु शास्त्रकारान्तरेषु च सूत्रस्यास्य यथामति विचारः शास्त्रकारैरुपपादित इति दिक् ।

**सन्दर्भग्रन्थाः -**

१. अष्टाध्यायी
२. वैयाकरणसिद्धान्तकौमुदी
३. लघुशब्देन्दुशेखरः
४. प्रौढमनोरमा
५. महाभाष्यम् (प्रदीपोद्यतसहितम्)

, नव्यव्याकरणविभागः
राष्ट्रियसंस्कृतसंस्थानम्, श्रीसदाशिवपरिसरः, पुरा

# मुग्धबोधस्य हलन्त्यंसूत्रदिशावलोकनम्

**निमाईचरणमहापात्र**

श्रीमतावोपदेवेनविरचितं मुग्धबोधंव्याकरणम् ।

मुकुन्दंसच्चिदानन्दं प्रणिपत्य प्रणीयते ।
मुग्धबोध्यं व्याकरणं परोपकृतये मया ।।

इति मङ्गलामाचारतः ''ओं नमः शिवाय:ह्ण इतिप्रथमं नमस्कारसूत्रं प्रणीतम्। पुनः भशब्दः इति द्वितीयसूत्रे मङ्गलप्रयोजनमुक्तम्। अस्मिन् व्याकरणे ११८४ एकशतचतुरशीत्यत्तरेकैसहस्रसूत्राणि विद्यन्ते। ग्रन्थेऽस्मिन्दश अध्यायाः सन्ति। सर्वेष्वपि अध्यायेषु चत्वारः पादाः सन्ति। प्रथमाध्यायस्य प्रथमपादः संशपादः। सिद्धान्तकौमुदी-प्रक्रियाकौमुद्ये रिव मुग्धबोधेऽपिप्रकरणक्रमेणसूत्राणांसन्निवेशः दृश्यते।

मुग्धबोधव्याकरणम् अइउ, ऋक्, एओच, ऐओच, हयवरल, ञणमण्डम्, झढधघभ, जडदगव, सफछठय, चटतकम्, शषसाद्यन्ताख्याः इति तृतीयं सूत्रंप्रस्तुतम्। इदं सूत्रं चतुर्दशमाद्येरसूत्रेभ्यः पृथक् प्रतीयते। अत्र सूत्रं वर्णसमाम्नायः दशविधः चतुर्दशमाहेश्वरसूत्रे ह हलन्तस्य उपदेशः अस्ति। परन्तुमुग्धबोधेदशविधसूत्रे हरकारस्य एकवारमुपोदेशः दृश्यते। एषां मध्ये येवर्णास्तं आदिवर्णान्तवर्णसमाहारसंज्ञाः स्युरिति सूत्रार्थः। अतः दशसूत्रेषुहलन्तवर्णाः न सन्ति। पाणिनीयव्याकरणे आदिरन्त्येना सहेतासूत्रेण प्रत्यहारः बोधः भवति। आदिरन्त्येन सहेता उच्चार्यमाणः वर्णः स्वस्य मध्यमानां च संज्ञाभवतीतिसूत्रार्थः।

तत्रापि श्रीमान्भट्टोजिदीक्षितः हलन्त्यमादिरन्त्येनसंहितयोः अन्योन्याश्रयमाविष्कृत्य हलन्त्यम् इति सूत्रंद्विरावृत्यः दोषस्य परिहारकृतः।

परन्तु अत्रमुग्धबोधे एतत्सर्वं नैव परिलक्षते। तस्मात्सूत्रकारः वोपदेवः आद्यान्तारव्याः इत्युक्त्वा वर्णनां समाहारसंज्ञा कृता। अतः दशविधसूत्रेषुकुत्रापिअन्तिमः हल्वर्णः नास्ति।

परन्तु प्रक्रियायां कार्यसम्पादनाय इत् कृतमिति चतुर्थ इत्संज्ञासूत्रां प्रणांतम्। कस्मैचित् कार्याय उच्चार्यमाण वर्णः इत्संज्ञः स्यात् इतिसूत्रार्थः। तस्य कार्येऽनुच्चारः यथा अचिक ङ चाःसंज्ञार्थाः। हसंअकारः उच्चारणार्थं मुग्धबोधव्याकरणस्य अन्तिमं सूत्रं बहुलं ब्रह्मणि।

गीर्वाणवाणीवदनंमुकुन्द।
सङ्कीर्त्तनञ्चेत्युभयंलिलोके ।।
सुदुर्लभं तच्च नमुग्धबोधा ।
दलभ्यतेऽतः पठनीयमेतत्।।

इति मङ्गलमुक्त्वा ग्रन्थस्य परिसमाप्ति कृतश्रीमतावोपदेवेनइतिदिक् ।

Asst. Professor, Deptt. of Sanskrit
Patraseyer Mahavidyalaya, Patrasayer,
Bankur, West Bengal

# हलन्त्यम्

**डॉ. निवेदिताकर**

लध्वर्थं हि संज्ञाकारणमिति भाष्यवचनानुसारं लाघवाय संज्ञाविधीयते । साक्षात् शक्तिग्राहकत्वं संज्ञासूत्रत्वम्। सम्यक् ज्ञानं संज्ञा, सम्यक् ज्ञायत इति संज्ञा, संज्ञायते अनया इति संज्ञा। संज्ञासंज्ञिनोबोधकं सूत्रं संज्ञासूत्रम्। संज्ञा श्चात्र नाममात्रकथनम्। पतञ्जलिमहोदयेन अस्य भाष्यमेवं प्रकाशितं यत् - यथा लोके तावत पितरौ जातस्य सूत्रस्य संवृत्तेऽवकाशे नामकुर्वन्ति - यज्ञदत्तो देवदत्त:, तयोरूपाचरादन्येऽपि जानन्ति यदस्य संज्ञेति एवमिहापि तथैव शास्त्रेऽपि संज्ञा विदितं वर्तते यत् तु पारिभाषिको संज्ञा, शास्त्रेप्रयोगनिर्वाहिका शास्त्रेण चाभिदिता संज्ञा भवति। यथा- पाणिनीयव्याकरणे गुण: वृद्धि: इत्यादि संज्ञा: कृता:।

पाणिने: प्रमुखग्रन्थ: अष्टाध्यायी, तत्र प्रथमाध्यायस्य तृतीयपादस्य (द्वितीयसूत्रात् -१.३.२) आरभ्य अष्टमसूत्रपर्यन्तम् - (१.३.८) इत्संज्ञाविधायकसूत्राणां निदर्शनं प्राप्यते। तत्र इत्संज्ञाया: को फल: जायते। केषां वर्णानां इत्संज्ञा भवतीति ज्ञायते, इत्संज्ञाविधायकसूत्रेण। तत्र सप्तसूत्राणि सन्ति, यथा- उपदेशेऽजनुनासिके इत्[१], हलन्त्यम्[२], आदिर्ञिटुडव:[३], ष: प्रत्ययस्य[४], लशक्वतद्धिते[५], चुटू[६] च। एतेषु हलन्त्यम् इति सूत्रम् अन्यतमम् । हलन्त्यमितिद्विपदमिदं सूत्रम्, हल् अन्त्यमिति, सूत्रमिदमष्टाध्याया: तृतीयपादस्य तृतीयसूत्रम्। हल् इति नपुंसकलिङ्ग प्रथमैकवचनम्, अन्त्यमिति, प्रथमैकवचनम्। हल विशेष्य तथा अन्त्यम् विशेषणं भवति। अस्य सूत्रस्य वृत्तिकारकसन्दर्भे 'उपदेशेऽनुनासिके इत्' इति पूर्वसूत्रम् इत्, उपदेशपदानामनुक्तनं जातं, यत्र इत् प्रथमैकवचनम्, उपदेशे सप्तमैकवचनं भवति।

'हलन्त्यम्' इति सूत्रं भट्टोजीदीक्षितेन वारद्वयं उच्चारितम्, प्रथमं तावत् 'हलन्त्यम्' इत्यत्र हल् इति सूत्रेऽन्त्यमिति स्यात्, प्रथमान्तमेकपदं सूत्रमिदम्। 'सप्तमीशौण्डै:'[७] इत्यनेन योगविभावपूर्वकं सप्तम्यैकवचने सप्तमी तत्पुरुष: 'सहसुपा'[८] इति सूत्रेण समासेन हलन्त्यम् इति सिद्धम्। अत्र 'उपदेशेऽजनुनासिके इत्' इति सूत्रात् उपदेश:, इत् पदानामनुवर्तनं जातम्। येन सूत्रादि: जायते 'हल्' (चतुर्दश माहेश्वरसूत्रसमात्राये) इत्यत्र अन्त्यवर्ण: इत्संज्ञक:। अत्र सूत्रोक्त 'हलन्त्यम्' पदं उद्देश्यम्, अनुक्तम् इत् पदं विधेय:। अत्र यस्य विधानं स: विधेय:, यस्यस्थाने विधानं उद्देश्य:।

अत्र प्रश्न: आयाति, भट्टोजीदीक्षितेन सिद्धान्तकौमुद्यां 'हलन्त्यम्' इति सूत्रस्य उच्चारणं किमर्थमिति चेत् यदि हलन्त्यम्, इति सूत्रस्य उपदेशे अन्त्यं हल् इत् स्यात् इत्यर्थ: स्वीकरणे सूत्रं नित्य अन्यत् अर्थ: (हल् इति सूत्रे अन्त्यमित् स्यात् इदं रूपं अर्थ: यस्य तत् हलन्त्यम्) न स्यात्, तर्हि अन्योन्याश्रय: दोष: समुपस्थिता: भवति, तद् यथा - 'हलन्त्यम्' इति सूत्रं हल् इति प्रत्याहारमनपेक्ष्यं स्वीयं कार्यं कर्तुमसमर्थं भवति, पुनश्च हल् इति प्रत्याहारं निर्मातुं प्रत्याहारविधायकसूत्रस्य 'आदिरन्त्येन सहेता' इत्यस्य अनिवार्यतया आवश्यकता वर्त्रते। अत: 'हलन्त्यम्' इति सूत्रं स्वीयार्थपरिप्रकाशनार्थमादिरन्त्येनसहेता इति सूत्रमपेक्षते। तथैव सस्मिन्नैव समये इत् संज्ञा (विधानार्थं हलन्त्यम् सूत्रस्य प्रयोजनमस्ति। इत संज्ञा विधानं विना 'आदिरन्त्येनसहेता' इति सूत्रं स्वीयं कार्यं न समर्थ:। अत: आदिरन्त्येनसहेता इत्यत् सूत्रं हलन्त्यम् इति सूत्रमपेक्षते। एवमेव परस्परापेक्षत्वमन्योन्याश्रत्वं जातम्। पुनश्च - अन्योन्याश्रयशास्त्राणि न प्रथन्ते इति न्यायात् अन्योन्याश्रय: दोष: सम्पद्यते अत्र। अस्यैव दोषस्य निराकरणाय तत्र भगवता भट्टोजीदीक्षितेन 'हलन्त्यम्' इति एकमेव सूत्रं (द्विवारमुच्चारयता द्विविधाश्चार्थ:, उपस्थाप्यते, येन समस्याया: समाधानं अचिरेण जायते। तद्यथा 'प्रथमं हलन्त्यम् सूत्रस्यार्थ: हल् इति सूत्रे, अन्त्यम् इत् स्यात्' इति कृतम् सूत्रमिदं 'आदिरन्त्येनसहेता' इति सूत्रेण निर्मितं हल् सदृशं कमपि प्रत्याहारं नाश्रयति। पुन: स्वयमेव लकारस्य इत् संज्ञा विधीयते, तेन च हयवरट्,

हकारादारभ्यहल् सूत्रस्य लकारं हल् इति प्रत्याहारः आदिरन्त्येन सहेता इति सूत्रेण निर्मीयते, ताश्च अन्येषां अजादीनां प्रत्याहाराणां निर्माणं भवतीति परिष्कारः। (अत्र हल् इति एकमात्रप्रत्याहारस्य निर्माणानन्तरम् अन्येषान् अच् अण् इत्यादीनां एकचत्वारिंशत् प्रत्याहाराणां निर्माणम् 'आदिरन्त्येन सहेता' इति सूत्रस्य साहार्येन भवतीति।

द्वितीयं तावत् हलन्त्यम् इति आवृत्तयोर्द्धितीयं सूत्रं यत्र तथैव हल् प्रथमान्तपदम्, अनत्यं प्रथमान्तं अथ 'उपदेशेऽजनुनासिके इत्' सूत्रात् उपदेश, इत् पदयोः अनुवर्त्तनं जातम् उपदेशऽन्त्यं हल् इत् स्यात्, उपदेशं नाम आद्योच्चारणम् । ततोऽण् अच् इत्यादि संज्ञासिद्धौ। अर्थात् उपदेशावस्थायां विद्यमान अन्त्य हल् (व्यञ्जनवर्णाः इत्संज्ञकाः। अत्र पञ्चपञ्चानि सन्ति, तानि यथा- उपदेशे, अन्त्यम्, हल्, इत् स्यात्। इदानीं प्रश्नः आयाति - कः नाम उपदेशः तत्रोक्तं उपदेश आद्योच्चारणम्, सामान्यतया आद्यं - प्रथमार्थं बोधयति, यत् परम्परायां मुनीत्रयं (पाणिनि - कात्ययान-पतञ्जलिः) निर्देशयति। महाभाष्ये प्रोक्तं - उपदिष्ट्या इमे वर्णाः पुनश्च धातुप्रतिपदिकनिपातप्रत्याहारसूत्रप्रत्ययादेशनामन्त्यम् अर्थात् धातु प्रातिपदिक - निपात - प्रत्याहार - सूत्र - प्रत्यय - आगमादीनाम् अन्त्यवर्णस्य इत्संज्ञा भवति, एषः उपदेशः आद्योच्चाराणमिति पदे पाणिनि - कात्यायान- पतञ्जलिमुनीनां ग्रहणं, तत्र आद्यं च तदुच्चारणमितिविग्रहः, एतत् आदे च - उपदेशे इति भाष्ये स्पष्टं वर्त्तते ।

पुनश्च कः उपदेशः इति प्रसङ्गे एका प्राचीनकारिकाऽपि प्रसिद्धा वर्त्तते -

धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्,<br>
आगमप्रत्ययादेशाः उपदेशाः प्रकीर्त्तिताः ।।

अर्थात् भ्वादिधातु - अइउण् आदि सूत्र-वार्त्तिक-लिङ्गानुशासन-आगम-प्रत्यय-आदेशः उपदेशत्वेन क्रियन्ते। अतः -

क. अइउण्, ऋलक् इत्यत्र ण् क् हलवर्णानां इत्

ख. डुपचष् पाके इत्याद्यौ ष् अन्त्य हल् धातुनां इत्संज्ञा ।

ग. नदट्, देवट् आदि गणपाठपाठितशब्दानां ट अन्तहल्वर्णानां इत् ।

घ. तृन्, तृचादि प्रत्ययेषु न्, च् वर्णानां श्च ।

ङ. ह्रस्वस्यपितिकृतितुक् सूत्रेण विहिता ।

तुगागमस्य अन्तिम ककारस्य इत् संज्ञा ।

च. 'द्वित्रिभ्यां तयस्यायज्वा'[९] इत्यतः विहितः अयच् आदेशे च कारस्य इत्संज्ञा एवं रूपेण इत् संज्ञा विधानानन्तरं 'तस्यलोपः'[१०] इत्यनेन एतेषां लोपः जायते ।

द्वितीयं पदं अन्त्यम् - अन्तिमोच्चारितः वर्णः इति भावः। यथा - अइउण् इत्याद्यौ अन्तिम ण् कारादीनां इत् संज्ञा। ततोऽण्अच् इत्यादि संज्ञासिद्धौ इति वचनेन अण् अच् प्रत्याहारः सिद्धति इति शम्।

**पादटिप्पणी -**

| | | |
|---|---|---|
| १ .पाणिनीय अष्टाध्यायी - १/ ३/ २ | २. | पा.अ. - २/ ३/ ३ |
| ३ .पा.अ. - २/ ३/ ५ | ४. | पा.अ. - २/ ३/ ६ |
| ५ .पा.अ. - २/ ३/ ८ | ६. | पा.अ. - २/ ३/ ७ |

सहायकाचार्या

शिक्षाशास्त्रसिभागः, श्रीजगन्नाथसंस्कृतमहाविद्यालयः

# हलन्त्यम् इति सूत्रदिशाऽन्योश्रयोदोष विचारविमर्शः

इन्दिरापण्डा

पाणिनिराचार्यः 'अष्टाध्यायी' इति नामकं ग्रन्थं रचितवान्। अष्टानामध्यायानां समाहारः अष्टाध्यायी, अष्टाध्याय्याः प्रथमाध्यायस्य तृतीयपादस्य तृतीयसूत्रं 'हलन्त्यम् (१.३.३) इति इत् संज्ञाविधायकमस्ति। पाणिनिः अष्टाध्याय्याम् एकवारं सूत्रमिदं प्रणीतवान्। परन्तु भट्टोजिदीक्षितः सिद्धान्तकौमुद्यां वारद्वयमुच्चारितवान्। 'हलन्त्यम्' ''आदिरन्त्येन सहेता'' इति सूत्रदूयमध्ये परस्परं निर्भरशीलत्वात् अन्योन्याश्रयदोषः जायते। दोषस्यास्य परिहाराय दीक्षितेन वारदूयमुच्चारितम्।

१. अन्योन्याश्रयदोषः यदि 'हलन्त्यम्' सूत्रस्य एकवारं ग्रहणं स्यात्। तदा अस्यार्थः अन्योन्याश्रयदोषः। हल् इति सूत्रे अन्त्यं हल् इत् स्यात् इति भविष्यति। हल् इति प्रत्याहारः यश्च 'आदिरन्त्येन सहेता' इति सूत्रेण 'हयवरट्' इत्यस्य हकारादारभ्य चतुर्दशसूत्र 'हल्' इत्यस्य अन्त्यलकारं यावत् साधितः भवति। अतः 'हल्'पदार्थज्ञानाय 'आदिरत्न्येन सहेता' इति सूत्रं अपेक्षते। पुनः 'आदिरत्न्येन सहेता' इति सूत्रस्य 'अन्त्येन इता सह आदिः मध्यगानां स्वस्य च संज्ञा स्यात्' इति व्याख्यानाात् इत् पदार्थ ज्ञानाय 'हलन्त्यम्' इति सूत्रमपेक्षते। अतः परस्परमध्ये अन्योन्याश्रयदोषः भवति। 'अन्योन्याश्रयाणि कार्याणि शास्त्रे न प्रवर्त्तते' इति भाष्योक्तवचनात् दोषस्यास्य निवारणाय भटोजिदीक्षितः सूत्रमिदं वारद्वयम् उच्चार्य द्विधा व्याख्यात्वान्।

२. प्रथमव्याख्या - 'हल्' ३.३.) हल् इति सूत्रेऽन्त्यम् इत् स्यात्। इति सूत्रार्थः, हलि अन्त्यम्' इति 'सप्तमी शौण्डैः' २.१.४० सूत्रेण सप्तमी ततपुरुषः सप्तमी' इति योगविभागात् पक्षे सहसुपा' (२.१.४) इति सूत्रेण सुप् सुपा समासः। 'उपदेशेऽजनुनासिकः इत्'' (१.३.२) इति सूत्रात् इत् इति अनुवर्तते। तेन 'हल्' इति चतुर्द्दश सूत्रे ष्वचान्त्यवर्णः इत् संज्ञकः भवति। एति अपगच्छतीति इत्। उच्चारणानन्तरं यस्य वर्णस्य लोपः, स एव इत् संज्ञकः।

प्रथमव्याख्यानेन इत् संज्ञा ज्ञाने, सति 'आदिरन्त्येन सहेता' हल्प्रत्याहारा सिद्धे इत्यनेन हल् न अन्योन्याश्रयदोषः।

३. द्वितीयव्याख्या - हलन्त्यम् (१.३.३) उपदेशे अन्त्यं हल् इत् स्यात् इति सूत्रार्थः। हल् अन्त्यमिति छेदः। हल्शब्दो नपुंसकलिङ्गोऽप्यस्ति; अन्त्यमिति नपुंसकसामानाधिकरण्यात्। उपदेशेऽजनुनासिक इत् इति पूर्वसूत्रात् 'उपदेशः' इत् इति च अनुवर्तते। धातुप्रातिपदिकनिपातप्रत्याहारसूत्रप्रत्ययादेशागमनामन्त्यमिति भाष्यम्। उपदेशः आद्योच्चारणम्। आद्यानां पाणिनीयप्रभृतीनां यत् प्रथममुच्चारणं स उपदेशः। उपशब्दः आद्यर्थकः। दिश् धातोः उचारणार्थः। भावे करणे च घञ् प्रत्ययः। महाभाष्येऽपि उपदेशविषये उक्तमस्ति यत् -

**धातु-सूत्र-गणोणादि नामलिङ्गानुशासनम्।**
**आगमप्रत्ययादेशाः उपदेशाः प्रकीर्तिताः।। इति**

४. इत् संज्ञास्थलानि - निम्नलिखितस्थलेषु 'हलन्त्यम्' इति इत् संज्ञा विधीयते।

(क) सूत्रपाठः - माहेश्वरसूत्रेषु 'अइउण्'हयवरट्' इत्यादिषु अन्त्यवर्णः।

(ख) धातुपाठः - णीञ् (प्रापणे) डुप्चष् पाके, डुकृञ करणे इत्यादिषु अन्त्यर्थ।

(ग) गणपाठः - देवट्, नदट् इत्यादिषु अन्त्यवर्णः

(घ) उणादिपाठः - उण्, उरच्, इरच् आदि उणादिप्रत्ययानामन्त्यः वर्णः

(ङ) आगमः - इट् (आर्धधातुकस्य इट् बलादेः) तुक् (शितुक) नुट्(ह्रस्वनद्यापो नुट्) इत्याद्यागभानां अन्त्यवर्णः
(च) प्रत्ययः - घञ्, अनीयर्, ल्युट्, सुप् इत्यादि प्रत्ययानामन्त्यवर्णः।
(छ) आदेशः - 'अवङ्' (६-१-१२३) 'औश' (अष्टाभ्यः औश) इत्याद्यादेशानाम् अन्तिमवर्णः इत्संज्ञकः भवति।

काशिकायाम् उपदिश्यते अनेन इत्युपदेशः इत्युक्त्या शास्त्र वाक्यानि सूत्रपाठः खिलपाठश्च इत्युक्तम्। खिलपाठस्तु सूत्रपाठस्य अङ्गभूतः। खिलपाठे धातुपाठः, गणपाठः, उणादि पाठः लिङ्गानुशासनं च अन्तर्भुक्तानि भवन्ति। एतत् सर्वम् उपदेशपदेन उच्यते।

५. निष्कर्षः - 'हलन्त्यम्' इति सूत्रस्य द्विधा व्याख्यानेन वारद्वयोच्चारणेन च अन्योन्याश्रयदोषः निराक्रियते। प्रथमव्याख्यानुसारेण 'हल' सूत्रस्य 'ल्' वर्णस्य इत् संज्ञायां ''आदिरत्न्येन सहेता' इति सूत्रेण हल् प्रत्याहार सिद्धिः। तदनन्तरं पुनः हलन्त्यम् इति सूत्रप्रवृत्त्या आन्त्यं हल् इत् स्यादित्यर्थे अण् अच् इत्यादि प्रत्याहारसिद्धि भवति इति शम्।

कनिष्ठव्याख्यात्री (संस्कृत)
सामन्तचन्द्रशेखर(क) महाविद्यालयः, पुरी
सहायक ग्रन्थसूची

**सहायकग्रन्थसूची**

१. अष्टाध्यायी - S.C. Vasu. Motilal Benaras Das, Delhi 1980
२. वैयाकरणसिद्धान्तकौमुदी - बालमनोरमाव्याख्योपेता - गोपालदत्त पाण्डेयः,
चौखम्बासुरभारती प्रकाशन, वाराणसी. २०१३

# लोपविधेः उपकारकत्वं हलन्त्यम् : एकमनुशीलनम्

सैकतचौधुरी

अष्टाध्यायां पदसाधुत्वसम्पादनार्थं बहूनि कौशलानि आविष्कृतानि जायते । यथाद्धित्वविधानं, प्रकृतिप्रत्ययविभाजनं, आदेशकल्पनं, आगमविधानं, ह्रस्व-दीर्घ-प्लुतादि व्यवस्था, उदात्तादि स्वरविभागकल्पनं, वृद्धिविधानं, गुणविधानं, ईत्वादिकार्यविधानं, समासकल्पनं, सज्ञापरिभाषादि सूत्रभेदकल्पेन सुत्राणामुपस्थापनं, कृत्प्रत्ययव्यवस्थेत्यादिभिः विविधैः कौशलैः सूत्रकल्पकशैल्या पदसाधुत्वकल्पनं विधीयते। इत्येदर्थं टि-घु-वृद्ध्यादीनि वहूनि परिभाषिकवचनानि उपकल्पितानि विद्यन्ते। प्रक्रियाकार्येनिर्वाहार्थं पदानां साधुत्वविवेचनार्थञ्च पारिपालितेष्वेतेषु कौशलविशेषेषु लोपविधिः अन्यतमः। अनेन विधिना लोपकार्येण प्रयोगार्हभूतानां पदानां प्रक्रियानिर्वहणं, शब्दानां साधूत्वसम्पादनं, शास्त्रीयरहस्योन्मचनं सूत्राणां तात्पर्यविवेचनञ्च स्वल्पीयसा अयासेन वैज्ञानिकेन उपायेन वा भवति। अष्टाध्याय्यां प्रायशः सप्ततिसंख्यकानि लोपकार्यनिमित्तिकानि सूत्राण्युपपादितानि विद्यन्ते । अतः अष्टाध्यायां पुरस्कृतेषु वहुविधेषु उपायविशेषेषु लोपविधिः स्वतन्त्रं स्थानं भजते नस्य लोपविधेः उपकारकत्वेन यानि इत्संज्ञाविधायकानि सूत्राणि उद्दिष्टानि जायन्ते, तेषु हलन्त्यम् इतिसूत्रमन्यतमम् । प्रबन्धेऽस्मिन् 'हलन्त्यम्'[१] इति इत्संज्ञाविधायकं सूत्रम् अधिकृत्य विचारः प्रस्तूयते।

हलन्त्यम् इतीदं सूत्रं पाणिनीयाष्टाध्यायीग्रन्थस्य प्रथमाध्यायस्य तृतीयपादस्य तृतीयसूत्रं वर्त्तते। 'उपदेशेऽजनुनासिक इत्'[२] इति सूत्रकम् उपदेशे, हत् च इति पदद्वयम् अत्र अनुवर्त्तते। सूत्रमिदम् अष्टाध्यायां सकृदुपलभ्यते, परन्तु सिद्धान्तकौमुद्यां द्विवारम् उपलभ्यते। अतः इदानीं मनसि शङ्केयं समुदेति यत्, हलन्त्यम् इति सूत्रस्यद्धिः आवृत्तेः किं कारणम् अस्ति ? इति चेत् अत्र उच्यते - अन्योऽन्याश्रयदोषस्य परिहाराय। हलन्त्यम् इति सूत्रस्थवाक्यस्य हल् इति एकं पदम्, अन्त्यम् इति चपरं पदं वर्त्तते । वाक्यार्थवोधुं प्रति पदार्थवोधस्य कारणत्वात् प्रथमतः हल्पदार्थजिज्ञासा समुदेति। तत्र व्यञ्जनवर्णात्म प्रत्याहाररूपं हल् अथवा माहेश्वरचतुर्द्दशसूत्रात्मकं हल्। अत्र अनेकार्थबोधकस्य हल्पदस्य अस्मिन् सूत्रे किमर्थकं हल्पदं ग्रहणीयम् ? इति शङ्का मनसि सञ्जायते। तत्र प्रत्याहारबोधकस्य हलपदस्य बोधाय प्रत्याहारविधायकम् आदिरन्त्येन इति सूत्रेण प्रत्याहारविधानाय इत्संज्ञकवर्णग्रहणाय हलन्त्यम् इति सूत्रम् अपेक्षते। एवञ्च हलन्त्यम् इति सूत्रं प्रत्याहारस्य कृते आदिरन्त्येन सहेता इति सूत्रम् आश्रीयते। आदिरन्त्येन सहेता इति सूत्रं च इत्संज्ञकवर्णग्रहणस्य कृते हलन्त्यम् इति सूत्रम् आश्रीयते। इत्थमत्र अन्योन्याश्रयदोषः उत्पद्यते।

एतस्य अन्योन्याश्रयदोषस्य परिहाराय भट्टोजिदीक्षितेन मूलसिद्धान्तकौमुदीग्रन्थे उपायस्वरूपं हलन्त्यम् इति सूत्रं द्विवारम् आवृत्तम्। तत्र हलन्त्यम् इति प्रथमसूत्रे उपदेशेऽजनुनासिक इत् इति सूत्रात् इत्पदमात्रमेव अनुवर्त्तते। अत एव हलन्त्यम् इति प्रथमसूत्रेण हल् (मा.सू.१४) इति माहेश्वरचतुर्द्दशसूत्रेण अन्त्यस्य लकारस्य इत्संज्ञा विधीयते। ततः इत्संज्ञायाम् इत्पदार्थे बोधे आदिरन्त्येन सहेता इति सूत्रेण अन्त्येत्संज्ञाकेन लकारेण सह हयवरट् सूत्रस्थं हकारं गृहीत्वा हलप्रत्याहारं विधाय हल्पदार्थः बोध्यते। ततः हल्पदार्थबोधे हलन्त्यम् इति आवृत्तद्वितीयसूत्रे उपदेशेऽजनुनासि् इत् इति सूत्रात् उपदेशे इत् च इति पदद्वयम् अनुवर्त्तते। अत एव हलन्त्यम् इत्यावृत्तद्वितीयसूत्रेण उपदेशावस्थायाम् अन्त्यस्थानां हल्-प्रत्याहारूपाणां व्यञ्जनवर्णाह्यम् इत्संज्ञा विधीयते। इत्थं हलन्त्यम् इति सूत्रस्य आवृत्तिरूपेण उपायेन अन्योऽन्याश्रयदोषः परिहरणीय इति सिद्धान्तकौमुदीकारस्य दीक्षितस्याशयः अवगन्तव्यः।

हलन्त्यम् इत्यावृत्तप्रथमसूत्रे हलि अन्त्यम् इति विग्रहे सप्तमी शौण्डैः इति सूत्रे सप्तमी इति योगं विभज्य

सह सुपा इत्यत्र च अनुवर्त्त्य सुप्सुपासमासेन हलन्त्यम् इति रूपं निष्पद्यते। प्रसङ्गेऽस्मिन् दीक्षितेन प्रौढमनोरमाग्रन्थं हलन्त्यम् इत्यत्र षष्ठीतत्पुरुषसमासं समाहारद्वन्द्वं चेति समासद्वयमुपस्थप्य पुनश्च तेनैव अत्र दुषणमुपद्भाव्य अन्योऽन्याश्रयदोषस्य परिहाराय निर्द्देशरूपेण सूत्रवृत्तिपक्ष एव प्रतिपादित:। तद्यथा - हल: अन्त्यम् इति विग्रहे षष्ठीतत्पुरुषसमासेन हलन्त्यम् इत्येतत् पदं निष्पादयितुं न शक्यम्। तथा च हस्य ल् इति विग्रहेण हल् इत्येतत् पदमपि निष्पादयितुं न शक्यम्। अत्र षष्ठीविभक्ते: अर्थ: समीप्यं भवति। ब्राह्मण-कम्बल इत्यादौ षष्ठातत्तुरुषसमासपक्षे षष्ठीविभक्ते: समीप्यार्थे ब्राहमणसमीपवर्त्ती अन्यस्वामिक: कम्बल: प्रतीयते। तथा च चित्रगुपदे चित्रंगवीणां समीपवर्त्ति वृक्षादि प्रतीयते। अपि तु ब्राह्मणस्वामिक: कम्बल: एव प्रतीयते। तथा च चित्रगुपदेन चित्रंवीणां प्रभुरेव प्रतीयते। अत एव ब्राह्मणस्य कम्बल: इति चित्रा गावो अस्य इति च विग्रहवाक्यप्रयोगोऽपि नाङ्गीकर्तुं शक्यते। इत्थं हल: अन्त्यम् इत हस्य ल् इति च विग्रहवाक्यम् षष्ठीतत्पुरुषसमासो वा नाङ्गीकर्त्तुं शक्यते। किं च हसमीपो ल्-हल् इति मध्यपदलोपि-तत्पुरुष-स्वीकारे गौरदशब्दरूप: दोष: भवति।

अपि च हल् च ल् च इति विग्रहे हल्-ल् इति समाहारद्वन्द्वसमासे संयोगान्तस्य लोप: इति सूत्रेण अन्त्यस्य लकारस्य लोब: कर्त्तुं न शक्यते। अत्र लकारस्य अण्त्वात् यण: प्रतिषेधो वाच्यम् इति वात्तिकेन लोप: निषिध्यते। अपि च यण: प्रतिषेधो वाच्यम् इति वार्तिकेन लोप: निषिध्यते। अपि च यण: प्रतिषेधो वाच्यम् इति वार्त्तिप्रत्याख्यानपक्षेऽपि संयोगान्तस्य लकारस्य लोपो भवितुं नार्हति। यत: हलो झलि इति सूत्रात् झल् ग्रहणमपकृश्य संयोगान्तस्य झल: एव लोपविधानात् हल्-ल् इत्यत्र संयोगान्तस्य लकारस्य झल् भिन्नत्वात् लोप: न जायते। अत: अत्र केनापि प्रकारेण संयोगान्तस्य लकारस्य लोपकरणासम्भवेऽपि मूलभूत: समाहारद्वन्द्वसमास: नैव भवितुम् अर्हति । किञ्च सहविवक्षायामेव द्वन्द्वसमासो भवितुं शक्नोति। हल् ल् इत्यवस्थायां नैव भवितुं शक्नोति। अत: हल् च ल् च इत्यत्र सहविवक्षा नैव संभवेत्। अत एव अन्योऽन्याश्रयदोषस्य परिहाराय हल च ल् च इति इत्थं समाहारद्वन्द्वस्य कल्पना असमीचीना भवति। अतएव हलन्त्यम् इत्येतस्य सम्पूर्णसूत्रस्य आवृत्तिकरणमेव अन्योऽन्याश्रयदोषस्य परिहाराय समीचीनम् इति मनोरमाकारस्य आशय: अवगन्तव्य:।

**पादटिप्पणी -**

१. पा.अ. १.३.३

२. पा.अ. १.३.२

शोधच्छात्र:, संस्कृतविभाग:

राञ्चिमहाविद्यालय:

# पाणिनीयसंज्ञासूत्राणां भेदविमर्श:

डॉ.अजयानन्दसाहु:

व्याकरणं नाम शब्दशास्त्रे ये शब्दा: व्याक्रियन्ते व्युत्पाद्यन्ते। शब्दानुगमादृते लोकेऽस्मिन् न कोऽपि प्रत्यर्थ: संभवति। सर्वज्ञानं शब्देनानुविद्धमिव भासते। अतएव यथार्थेनोक्तं वाक्यपदीये-

न सोऽस्ति प्रत्ययो लोके य: शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ।।[१]

एतादृशं शब्दमवलम्ब्य शब्दशास्त्रं येऽधीयते विदन्ति ते वैयाकरण:। ते च शाब्दिका:। सत्सु अनेकेषु व्याकरणेषु पाणिनीयव्याकरणं मूर्धन्यस्थानं भजते। पाणिनेरष्टाध्यायी सूत्रग्रन्थ: लाघवमूलकोपायान् आश्रित्य विरचितोऽस्ति। अष्टाध्याया: प्रथमाध्यायस्य प्रथमे द्वितीये पादे च - प्रमुखसंज्ञासूत्राणि महर्षिपाणिनिना विरचितानि। अन्यत्र चावश्यकतानुसारं विधिसूत्रसहारकारीणि प्रक्रियोपयोगीनि संज्ञासूत्राणि विहितानि। शब्दजगति नामकरणस्य प्राधान्यात् संज्ञासूत्राणां स्थानम् अष्टाध्याया: अदावेव कल्पितमस्ति। तामेव पद्धतिमवलम्ब्य भट्टोजिदीक्षितेन सिद्धान्तकौमुद्यनादौ संज्ञाप्रकरणं प्रदत्तमस्ति।

सूत्रभेद: -

व्याकरणे षट्प्रकारकाणि सूत्राणि वयं जानीम:। निषेधसूत्रं पुरुस्कृत्य सत्वप्रकारकाणि इति केचिद् वदन्ति तथा चोक्तं -

संज्ञा च परिभाषा च विधिर्नियम एव च ।
अतिदेशोऽधिकाश्च षड्विधं सूत्रलक्षणम् ।।

तत्र च संज्ञासंज्ञिप्रत्यायकं सूत्रं संज्ञासूत्रम्। यथा वृद्धिरादैच्[२] अदेङ् गुण:[३], शेषो घ्यसखि[४] इत्यादीनि, अनियमे नियमकारिणी परिभाषा - तस्मिन्निति निर्दिष्टे पूर्वस्य[५] इत्यादीनि। आदेशादिविधायकं सूत्रं विधिसूत्रम् - यथा इकोयणचि[६] एचोऽयवायाव:[७] इत्यादीनि। निषेधसूत्राणाम् अभावरूपापूर्वबोधकत्वेन विधिशास्त्रस्यान्तर्भावो भवति। अनचि च[८] इत्यादीनि। प्राप्तस्य विधे: नियामकं सूत्रं नियमसूत्रम्। यथा - कृत्तद्धितसमासाश्च[९] इत्यादीनि। अन्यतुल्यत्वविधानम् अनिदेश: यथा - स्थानिवदादेश: अनल्विधौ (१.१.५६) गोतोणित् इत्यादीनि। एकत्रोपात्तरय अन्यत्र व्यापारोऽधिकार: यथा कारके[१०] प्रत्यय:[११] परश्च[१२] इत्यादीनि। ''अधिकारस्त्रिधामत:'' इत्युक्त्या सिंहावलोकितं, मङूक्यप्लुतं, गंगाप्रवाहश्च इति त्रिविध:। एवमपि अतिदेश-विधि प्रभृति सूत्राणां भेद: शास्त्रकारै: कल्पितो दृश्यते । अत्र शोधपत्रे संज्ञासूत्राणां प्रकारविषये अस्माभि: किंचिद् आलोच्यते। पाणिनीये प्राय: अशीत्यधिकं द्वे शते (२८०) संख्यकानि संज्ञासूत्राणि सन्ति। विधिशास्त्राणां लाघवेन प्रवृत्यर्थं पाणिनिना संज्ञासूत्राणि कल्पितानि। अतएवोच्यते ''लघ्वर्थं हि संज्ञाकरणम्''।

**संज्ञाभेदा: -**

संज्ञा लौकिकी परिभाषिकी भेदेन द्विधा । लौकिकी इति अन्वर्थात्मिका - इत् (एति गच्छन्तीति) अव्ययादिसंज्ञा:। परिभाषिकी कृत्रिमात्मिका। यथा टि, घु, भ इत्यादय:। इमाश्च योगरूढय:, रूढयश्च। अत: संज्ञायते अनयेति व्युत्पत्तौ संज्ञाशब्द: निष्पद्यते ।

भेदमिमं स्वीकृत्य विद्वांस: संज्ञा त्रिविधा इति कल्पयन्ति। यथा अन्वर्थ - कृत्रिम - परम्परागता: संज्ञा:। सर्वनाम-अव्यय-षड्-संप्रदानादय: अन्वर्थसंज्ञा:। अर्थमनुगता इति। कृत्रिमास्तु स्वयं पाणिनिना कल्पिता:। यथा - टि,

घु, घ, भादय:। परंपरां प्रति श्रद्धया। आचार्येण प्रातिपदिकसार्वधातुकार्धधातुकाङ्गपदोत्तममध्यमप्रथमादिसंज्ञा: विहिता:।

पुन: केचनालोचका: संज्ञा: पंचधा भवति इति कथयन्ति यथा - शब्दसंज्ञा:, अर्थसंज्ञा:, धर्मसंज्ञा:, क्रियासंज्ञा:, अभावसंज्ञा: च।

(१) शब्दसंज्ञा: - यस्यानुपूर्विविशिष्टस्य शब्दस्वरूपस्य संज्ञा विहिता तस्यैव शब्दस्वरूपस्य संज्ञया बोध:। एता: वर्ण-प्रकृति-प्रत्यय-प्रत्ययान्तादि भेदेन चतुर्धा कल्पिता:। तद्यथा - वृद्धिरादैच्, अदेङ् गुण:, ह्रस्वं लघु, इत्यादय: वर्णसंज्ञा:। दाघाध्वदाप्, स्वरादिनिपातव्ययम्, सनाद्यन्ताधातव: इत्यादय: प्रकृतिसंज्ञा:। तरबतमपौ घ:[१३], क्तक्ववतू निष्ठा, कृदतिङ् इत्यादय: प्रत्ययसंज्ञा:। तस्य परमाम्रेडितम्, सुप्तिङन्तं पदम्, ईदूदेद्द्विवचनं प्रगृह्यम् इत्यादय: प्रत्ययान्तसंज्ञा:।

(२) अर्थसंज्ञा: - अर्थमाश्रित्य एता: संज्ञा: विधीयन्ते। तद्यथा - ध्रुवमपायेऽपादानम्[१४], कर्तुरीप्सिततमं कर्म[१५] इत्यादिसमस्तकारकान्तर्गतसूत्राणि अर्थसंज्ञकानि भवन्ति।।

(३) धर्मसंज्ञा - वर्णानामुदातादिधर्मा: गुणा:। उच्चैरुदात्त:[१६], नीचैरनुदात्त:[१७] समाहारस्वरित:[१८] इत्यादय:।

(४) क्रियासंज्ञा - क्रियामाश्रित्य इमा: विधीयन्ते । यथा - सन्निधिक्रियामाश्रित्य संहितासंज्ञा, संक्षिप्तीकरणमादाय समाससंज्ञा। समसनमिति समास: इति व्युत्पत्ते: ।

(५) अभावसंज्ञा - प्रतियोगिकमभावमादाय या संज्ञा सा अभावसंज्ञा यथा - अदर्शनं लोप:[१९], पुनरपि संज्ञाविधानप्रक्रियामादाय त्रिधा विभज्यते । यथा -

(१) स्वदेशे संज्ञाविधायकानि - अदेङ्गुण:, दाधाघ्वदाप्[२०], तत्रापि यथोद्देशकार्यकालपक्षद्वयमादाय द्विधा भिद्यते। उद्देश: उपदेशदेश:। उद्देशमनतिक्रम्य यथोद्देशं संज्ञापरिभाषम् इति परिभाषितम्। कार्येण काल्यते स्वसन्निधिं प्राप्यते अर्थात् विधिवाक्येन अन्विता सती संज्ञाविधीयते।

(२) अधिकारात् संज्ञाविधायकानि - कारके, कृत्या:, प्राग्रीरीश्वरनिपाता: इत्यादीनि ।

(३) स्वदेशे संज्ञाविधायकत्वे सति अनुवृत्या संज्ञा विधायकानि - ह्रस्वं लघु[२१], संयोगे, गुरु[२२], दीर्घं च[२३] इत्यादीनि सूत्राणि।

वस्तुत: संज्ञा एका अखण्डा च । उपर्युक्ता: भेदा: बुद्धे: प्रपञ्चभूता:। भेदबुद्धिमादाय पर्यालोचकै: एतत् सर्वं परिकल्पितम्। तथापि नूतनत्वोद्घाटने समालोचकानां प्रयासोऽयं प्रशंसार्ह: इति शम्।

अतिथिअध्यापक:
राष्ट्रियसंस्कृतसंस्थानम्
श्रीसदाशिवपरिसर:, पुरी

पादटिप्पणी -

| | | | |
|---|---|---|---|
| १. | वाक्यपदीयम् - प्रथमकाण्ड, श्लो २३ | २. | पाणिनीय अष्टाध्यायी - १.१.१ |
| ३. | पा.अ.१.१.२ | ४. | पा.अ.१.४.७ |
| ५. | पा.अ.१.१.६६ | ६. | पा.अ.६.१.७७ |
| ७. | पा.अ.६.१.७८ | ८. | पा.अ.८.४.४७ |

९.पा.अ.१.२.४६

१०. पा.अ.१.४.२३

११.पा.अ.३.१.१

१२. पा.अ.३.१.२

१३.पा.अ.१.१.२२

१४. पा.अ.१.४.२४

१५.पा.अ.१.४.४९

१६. पा.अ.१.२.२९

१७.पा.अ.१.२.३०

१८. पा.अ.१.२.३१

१९.पा.अ.१.१.६०

२०. पा.अ.१.१.२०

२१.पा.अ.१.४.१०

२२. पा.अ.१.४.११

२३.पा.अ.१.४.१२

# साधकतमं करणम्

**माधबनायक:**

वैयाकरणानां मते करणतृतीयाया: आश्रयव्यापारौ अर्थौ। अयमर्थ: 'साधकतमं करणम्'[१] इति सूत्रात् लभ्यते। तमवर्थ: प्रकर्ष:। स च प्रकर्ष: कारकान्तरापेक्षया न तु करणान्तरापेक्षया। व्यापारवत् कारणं कारणम्। कौण्डभट्टस्य मते करणं विवक्षाधीनम्। अत: स्थाल्या पच्यते इत्यत्र निश्चिताधिकरणत्वेऽपि स्थाली शीघ्रतरपाकाधनत्वेन अनुभवति वैवक्षिकं करणम्। एवञ्च एकस्मिन् वस्तुनि विवक्षाभेदेन कर्तृत्वं करणत्वञ्च सम्भवति। नागेशस्य मते करणत्वञ्च करणताशक्तिमत्वम्। सा च शक्ति: व्यापारव्यवधानेन क्रियानिष्पति:। क्रियतेऽसौ इति कर्मव्युत्पत्त्या क्रियाशब्दोऽत्र फलपरक: तदुक्तं भर्तृहरिणा क्रियाया: परिनिष्पत्तिर्यद्व्यापारादनन्तरम्। विवक्ष्यते तदा तत्र करणं तत्सदा स्मृतम्।

**सूत्रार्थ: -**

करणसंज्ञाविधायकं सूत्रमिदम्। तत्र साधकतमं संज्ञी, करणं संज्ञा। कारके इत्यधिकारो विद्यते। साध्यते क्रियाया: फलसिद्धि: क्रियते अनेन तत्कारणं साधकम्। साधकसंसिद्धौ इति धातु:। सम्यक्सिद्धिकर्त्ता। अथवा साध्नोति क्रियाफलं साक्षाज्जनयति अनेन इति साधकम्। अतिशायने साधकं साधकतमम्। अतिशायने तमप्प्रत्यय: तेन साधकतमं प्रकृष्टोपकारकमित्यर्थ:। क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यादिति सूत्रार्थ:। कारकाधिकारात् क्रियासिद्धौ इत्यर्थो लब्ध:। क्रियासिद्धौ अर्थात् फलसिद्धौ इति। प्रकृष्टत्वनिरूपणं रामेण ''बाणेन हतो बाली इत्यत्र यदि राम: बाणसन्धानं न कुर्यात् तदा बालिबधो न सम्भवति। धनुष: विना बाण: न प्रसरेत्। यदि वाण: बलिनं स्पृशेत् तदा बालिबधो न स्यात्। इत्थं प्रकृष्टोपकारकता राम-धनुष-वाणेषु त्रिषु वर्त्तते। अत एव कस्य करणसंज्ञा भवेदिति जिज्ञासायां नागेशेनोक्तं यत्- यद्व्यापारव्यवधानेन क्रियानिष्पत्ति: तत्प्रकृष्टम्।

अत्र वाणसन्धानान्तरं हननक्रियाया: सिद्धि: जाता। अत: बाणस्य करणसंज्ञा भवति। तेन धनुषा बाणेन बिध्यति इति वाक्यमसाधु। अत्र धनुष: करणसंज्ञा न भवति। यद्यपि धनु: साधनं भवति। तथापि क्रियानिष्पत्तौ अव्यवधानत्वं नास्ति। अत: धनुष: वाणेन विध्यति इति प्रयोग: स्यात्। यदा वाणस्य विवक्षा न वर्तते। तदा धनुषा विध्यति प्रयोगो भवति। एवञ्च धनुष: करणसंज्ञा सिध्यति।

सूत्रस्योदाहरणं रामेण बाणेन हतो बाली। हननक्रियासिद्धौ स्वातन्त्र्यात् राम: कर्त्ता। प्राणवियोगरूपफलसिद्धौ प्रकृष्टोपकारक: बाण:। अत: बाणस्य करणसंज्ञा। कर्तु: इष्टतमं कर्म बाली। तथा च कर्तृकरणयोस्तृतीया इति सूत्रेण रामेण बाणेन उभयत्र तृतीयाविभक्ति:। हत इत्यत्र कर्मणि क्तप्रत्यय:। अत: कर्मण: उक्तत्वात्। बाली इत्यत्र प्रथमा।

तमब्ग्रहणं किमर्थमिति शङ्कासाधकं करणञ्च पर्यायवाचक: शब्द:। साध्नोतीति साधकम् । क्रियतेऽनेनेति करणसाधकम्।

अत्र कारकाधिकारो वर्त्तते। करणमिति महासंज्ञा। क्रियतेऽनेनेति विग्रहे कृधातो: करणे ल्युट्प्रत्यये करणमिति रूपं निष्पन्नम्। करणशब्दस्य योऽर्थ: साधकशब्दस्य सोऽपि अर्थ:। करणशब्दस्य महासंज्ञया साधकत्वे (उपकारकत्वे)

लब्धे साधकग्रहणं व्यर्थम्। साधकग्रहणं व्यर्थीभूय साधकपदं साधकतमार्थं बोधयति। अर्थात् प्रकृष्टोपकारार्थं भविष्यति। एवञ्च साधकं करणम् इत्येवं सूत्रमस्तु। तथा च सूत्रे तमब्ग्रहणं व्यर्थमिति शङ्का आयाति।

अत्र समाधानम्, सूत्रे तनब्ग्रहणस्य फलं 'गङ्गायां घोषः 'इत्यत्र सप्तमीविभक्तिरूपम्। अस्याममाशयो यत् यदि क्रियतेऽनेनेति करणमिति व्युत्पत्त्या महासंज्ञया साधकार्थः लभ्यते। तर्हि आधारोऽधिकरणम् इति सूत्रेऽपि अधिकरणस्य महासंज्ञा स्वीकरणीया। अर्थात् अधिक्रियतेऽस्मिन्निति व्युत्पत्त्या अधि उपसर्गात् कृधातोः अधिकरणेऽर्थे ल्युट्प्रत्यये आधारार्थे लभ्यते। तत्रापि आधारपदम् आधारतमार्थं बोधयति।

तेना सर्वावयवव्याप्त्याधारस्यैव अधिकरणसंज्ञा स्यात्। यथा तिलेषु तैलम्, सर्वस्मिन् आत्मा अस्ति, इत्यादावेव अधिकरणसंज्ञा प्राप्नुयात्। परन्तु गौणाधारे अधिकरणसंज्ञा न प्राप्नोति। तथा च गङ्गायां मित्यत्र गङ्गाशब्दस्य अधिकरणत्वाभावेन सप्तमी नैव प्राप्नोति।

साधकतमं करणमिति सूत्रे तमब्ग्रहणात् न दोषः। यतो हि तमब्ग्रहणं व्यर्थीभूय ज्ञापयति यत् - अस्मिन् कारकाधिकारे प्रकर्षार्थप्रत्ययं विना शब्दसामर्थ्यगम्यार्थोपकर्षो नाश्रीयते। अर्थात् अन्वर्थसंज्ञाबललब्धार्थः नाश्रीयते कारकप्रकरणे। तेन अस्मिन्सूत्रे साधकमात्रबोधवखा साधकपद गृहीतम्। साधकपदं प्रकृष्टोपकारकपरं न भवति। साधकतमार्थं न बोधयति।

एवञ्च 'आधारोऽधिकरणमिति' सूत्रे आधारपदं न आधारतमार्थबोधपरम्। सर्वावयवव्याप्त्या यो हि आधारः तस्य अधिकरणसंज्ञा इत्यर्थो न स्यात्। तथा च गौणमुख्योभयविधाधारस्य अधिकरणसंज्ञा भवति। तेन गङ्गायां घोषः इत्यत्र गौणाधारस्यापि अधिकरणसंज्ञा सिध्यति। तेन सप्तम्यधिकरणे इति सूत्रेण सप्तमी सिद्धा। 'गङ्गायां गावः' इत्यपि उदाहरणं स्यात्।

साधकतमं करणिति सूत्रे तमपः फलं यथा -

साधकतमं करणमिति सूत्रे तमब्ग्रहणस्य फलन्तु 'धनुषो बाणेन बाली हतः' इति। अत्र धनुः उपकारकम्। परन्तु प्रकृष्टोपकारकत्वाभावात् धनुषः करणसंज्ञा न भवति। बाणसन्धानानन्तरमेव प्राणवियोगरूपस्य फलस्य निष्पत्तिः जाता। अतः प्रकृष्टोपकारकत्वं बाणे वर्तते न तु धनुषि। अतः बाणस्यैव करणसंज्ञा भवति। 'गङ्गायां घोषः' इत्यत्र लक्षणा गङ्गायाः जलप्रवाहे घोषनिष्ठाधेयतानिरूपिता अधिकरणता न सम्भवति। अर्थात् जलप्रवाहे घोषस्यावस्थितिः न सम्भवति। अतः गङ्गायाः आधारतत्वाभावात् अधिकरणसंज्ञा न भवति। एवञ्च सप्तमी न प्राप्नोति।

यदि 'गङ्गायाः तीरे घोषः' इत्यर्थः करिष्यते तदा गङ्गायामिति नोत्पद्यते। अतः मुख्यार्थबाधे लक्षणा इति लक्षणया गङ्गापदं तीरबोधकम्। अर्थात् गङ्गापदं गङ्गातीरे लाक्षणिकम्।

जलरूपार्थस्य सामीप्यसम्बन्धो तीरेण सह वर्त्तते। अतः शक्त्यसंबन्धरूपा लक्षणा वर्तते। अथवा तीरधर्मस्य घोषाधारस्य अत्यन्तसामीप्यात् प्रवाहे आरोपः। नागेशमते तमब्ग्रहणस्य फलं यदि महासंज्ञया साधकशब्दस्य यद् व्यापारान्तराव्यवधानेन फलोत्पादके शक्तिः वर्त्तते। आधारपदं आधारतमार्थं बोधयति। तदा गङ्गायां घोषः इत्यादि प्रयोगसाधनाय कारकप्रकरणे उद्देश्यवाचकपदे स्वरितत्त्वप्रतिज्ञा करणीया।

यथा 'आधारोऽधिकरणम्'[२] इति सूत्रे आधारः भवति उद्देश्यवाचकपदम्। तत्र स्वरितत्त्वप्रतिज्ञया 'स्वरितेनाधिकारः'[३] इति सूत्रस्योपस्थितिः स्यात्। एवञ्च अधिकारः नाम किञ्चित् अधिकं कार्यम्। अर्थात् स्वरितेनाधिकं कार्यम्। तेन गौणाधारस्य मुख्याधारस्य चाधिकरणसंज्ञा भवति।

साधकतमं करणमिति सूत्रे साधकतमशब्दे स्वरितत्त्वप्रतिज्ञा न कृता। यतो हि सूत्रे तमब्ग्रहणेन स्वरितत्त्वाभावो

बोध्यते। एवञ्च व्यवधानेन फलोत्पादके करणत्वोपचारेण तृतीयान्तप्रयोगस्यासाधुत्त्वबोधनं तमब्ग्रहणस्य प्रयोजनम्।

साधकतमसूत्रे तमब्ग्रहणस्य सामर्थ्यात् अन्यत्र सूत्रे स्वरितत्त्वं निर्दिष्टं न तु साधकशब्दे इति ज्ञाप्यते।

अत्रार्थे भाष्यप्रमाणस्वरितेनाधिकारः इति सूत्रभाष्ये एतत्स्पष्टम्। सर्वे अवयवाः यत्र व्याप्ताः तस्यैव आधारस्य अधिकरणसंज्ञा स्यात्। यथा 'तिलेषु तैलम्', दध्नि सर्पिः इत्यादौ अधिकरणसंज्ञा स्यात्। गङ्गायां गावः, कूपे गर्गकूलमित्यत्र अधिकरणसंज्ञा न स्यादिति आशङ्क्य स्वरितेनाधिकं कार्यं भवतीत्यत्रापि सिद्धं भवति भाष्यकृता समाहितम्। इति दिक्।

**पादटिप्पणी -**

१. अ.सू. १/४/४२

२. अ.सू. १/४/४५

३. अ.सू. १/३/११

शोधच्छात्रः (व्याकरणविभागः)
राष्ट्रियसंस्कृतसंस्थानम्
श्रीसदाशिवपरिसरः, पुरी, ओडिशा -
७५२००१

# नागेशदिशा कर्मसंज्ञा

**सितांशुरञ्जनदाश:**

संस्कृत वाङमये कारकस्य स्थानमन्यतमम्। तत्रादौ ग्रन्थकार: कति कारकाणि इति निरुपयितुं आह

कर्ता कर्म करणं सम्प्रदानं तथैव च।
अपादानाधिकरणमित्याहु: कारकाणि षट्।।[१]

अनया कारिकया स्पष्टं यत् कारकाणि षट्संख्यकानि। षट्षु कारकेषु कर्मकारकबिषये बहुषु शास्त्रेषु आलोचनं दृश्यते। परन्तु नागेशभट्टेन परमलघुमञ्जूषा ग्रन्थे कर्म बिषये चर्चा कृता। किं नाम कर्म इति जिज्ञासा नागेशेनोक्तम् यत् कर्मत्वं च ''प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनेद्देश्यत्वम्।''[२] इदमेव कर्म लक्षणे इप्सिततमत्वम्। अत्र समन्वय: यत् 'हरिं भजति' इत्यत्र प्रकृतधातु: भज् धातु:, तद्धात्वर्थप्रधानीभूतव्यापार: - भजनानुकूलो व्यापार:, तत्प्रयोज्यं यत् प्रकृतधात्वर्थफलं-प्रीतिरुपफलं, तदाश्रयत्वेन उद्देश्यत्वेन हरेरिति। सामान्यतस्तु धात्वर्थरुपव्यापारात् फलस्य साक्षात् उत्पति: तथापि क्वचित् परम्परयापि भवति यथा 'गां दोग्धि पय' इत्यत्र पयस: कर्मत्वसिद्धये व्यापारप्रयोज्यत्व निवेश:, प्रयोज्यत्वं तु साक्षात् परम्परया वा जन्यत्वम्। अन्त: स्थितद्रवद्रव्यनिष्ठविभागानुकूलव्यापारानुकूलव्यापार: दुह् धात्वर्थ:। अत्र पयोवृत्तिविभाग:, तज्जनक: गोपवृत्तिव्यापार: ,गोपवृत्तिव्यापारं विना पयसि व्यापारपूर्वकविभागानुत्पते: गोपव्यापारजन्य: गोव्यापार: धातुवाच्य: । तज्जन्यस्तु पयोनिष्ठव्यापारपूर्वक: विभाग:। तत्र पयोनिष्ठव्यापारस्य विभाग: विभागनान्तरीयकत्वात् न धातुवाच्यता। एवञ्च विभागरुपफलस्य गोपनिष्ठप्रधानव्यापारजन्यत्वाभावात् कर्मसंज्ञा न स्यात् अत: साक्षात्परम्परासाधारणं प्रयोज्यत्वं निवेशनीयम्। यद्यत्र साक्षात् व्यापारजन्यत्वमिति उच्यते तदा प्रधानीभूतगोपवृतिव्यापारजन्यत्वस्य गोव्यापारे एव सत्वात् विभागे तदभावेन पयस: कर्मत्वं न स्यात्। साक्षात्परम्पराप्रयोज्यत्वेनिवेशे तु प्रधानव्यापारप्रयोज्यत्वस्य विभागेऽपि सत्वात् तदाश्रयत्वेन पयस: कर्मत्वसिद्धि:।

'प्रयागात् काशीं गच्छति' इत्यत्र प्रयागस्य कर्मत्ववारणाय प्रकृतधात्वर्थफलमिति निवेश्यते।[३] तेन अत्र यो विभाग: दृश्यते स न प्रकृतधात्वर्थ:। अयं विभागस्तु नान्तरीयकतया नाम अपरिहार्यत्वेन गमने सत्युपपद्यते। अत्र प्रयोगे प्रकृतधातु: = गम् धातु:, तद्धात्वर्थव्यापार: = उत्तरदेशसंयोगानुकूलव्यापार:, तत्प्रयोज्यप्रकृतधात्वर्थफलं संयोग: तत्तु काश्या एव न तु प्रयागस्य । अत्र केवलं यत्किंचित्फलमिति कथने तु विभागस्यापि फलत्वेन प्रतीयमानत्वात् तत्रापिप्रसक्ति। तदेवोक्तम् प्रयागस्य फलतावच्छेदकसम्बन्धेन फलाश्रयत्वेन अनुद्देश्यत्वात् ।फलतावच्छेदकसम्बन्धस्तु स एव येन सम्बन्धेन फलाश्रयत्वप्रकारिका इच्छा भवति। स च तत्तद्धातुभेदात् भिन्नो भवति। अत्र उत्तरदेशसंयोगानुकूव्यापारेण काशीं संयोगाश्रयो भवतु इच्छाबिषयत्वन काश्या एव कर्मसंज्ञा। अत एव फलाश्रयत्वेन सम्बद्धुमिष्यमाणस्य कर्मसंज्ञा इति प्रसिद्धि:।

उद्देश्यत्वनिवेशस्यसाधारणं प्रयोजनं तु काशीं गच्छन् पथिमृत: इति काश्या: फलाश्रयत्वाभावेपि फलाश्रयत्वेनोद्देश्यसत्वात् कर्मत्वम्।[४] काश्या: संयोगरुपफलाश्रयत्वोत्पते: प्राक् कर्तु: मार्ग एव मरणेन संयोगरुपफलोत्पति: असंभविनी तथा सति तदाश्रत्वमपि काश्यां न सम्भवति तदा अयं प्रयोग: न स्यात्। अत: संयोगरुपफलाश्रयत्वोत्पते: प्रागपि तस्या: फलाश्रयत्वेन उद्देश्यत्वं तु अस्ति अत: न कापि अनुपपत्ति:।

कर्मलक्षणे ईप्सिततमपदस्य स्वार्थविशिष्टयोग्यताविशिष्टे लक्षणा। तथा च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वयोग्यताविशेषशालित्वं कर्मत्वम्।[५] तच्च प्रयागस्यापि अस्ति। उद्देश्यतायाः सामर्थ्येन युक्तत्वमिति अभिप्रायः। सम्प्रति प्रयागगमनस्य असम्भवेपि अनन्तरं गमनानुकूलव्यापारेणसंयोगाश्रयस्य अनन्तरमुत्पत्तियोग्यता अस्ति एव इत्यर्थः।

अनेनैव उद्देश्यत्वयोग्यताशालित्वव्याख्यानेन किं 'ग्रामं गच्छति' अथवा 'ओदनं पचति' इति इति प्रश्ने न ग्रामं गच्छति न ओदनं पचति प्रयोगः व्याख्याताः। अत्रतु ताडनादिना पराधीनतया विषभोजनादिकं तत्र विषादिः तादृशफलाश्रयत्वेनोद्देश्यत्वमेव । एवमेव कालत्रये काशीगमनशून्ये चैत्रे काशीं गच्छतीति वारणाय योग्यताविषेश फलशालित्वे विशेष इति पदं निवेश्यते। तेन उद्देश्यतायोग्यताभावेपि तादृश्ययोग्यताविशेषराहितत्येन कर्मत्ववारणं क्रियते। किञ्च एतादृश स्थले तद्विशेषवत्वेपि अनुभव एव निषेधप्रयोजकः। तेन वक्ता तादृशं पुरुषं जानन् 'अयं काशीं न गच्छति' इति प्रयोगं करोति एव तत्र न किञ्चित् बाधकम्।

यथा इप्सिततमस्य कर्मसंज्ञा भवति तथैव अनीप्सितस्यापि कर्मसंज्ञा विधीयते। अतः नागेशेनोक्तं यत्प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वं अनीप्सितकर्मत्वमित्।[६] प्रयागत् काशीं गच्छति इत्यत्र प्रयागस्य कर्मत्व वारणाय प्रकृतधात्वर्थफल इति। द्वेष्योदासीनकर्मसंग्रहार्थं इदं लक्षणम् । तत्र दुहादीनां द्विकर्मकाणां व्यापारद्वयार्थकत्वे अकथितञ्च व्यर्थं पूर्वेणैवसिद्धेः। एकव्यापारवोधकत्वपक्षे तु षष्ठी वाधनार्थम्। तत्पक्षे कर्मसम्बन्धित्वे सति अपादानादिविशेषाविवक्षितम् अकथितकर्मत्वम् इति तृतीयलक्षणेन गां दोग्धि पय इत्यादौ गामित्यस्य कर्मत्वसिद्धिः। तस्यार्थः यत् गौः पयः त्यजति , देवदत्तः गवा पयस्त्याजयति इत्याद्यर्थस्यापि प्रतीत्या पयोनिष्ठविभागानुकूलगोनिष्ठव्यापारानुकूलव्यापारादिर्दुहादिधत्वर्थः अत्र पक्षे फलद्वयस्य उपादानात् 'कर्तुरीप्सिततमम् कर्मं इति सूत्रेणैव गोः पयसश्च कर्मत्वं सिद्धम्।

किन्तु यदा गोनिष्ठव्यापारादेः प्रतीत्यभावेपि दुहादे प्रयोग दृश्यते तदा पयोनिष्ठविभागानुकूलव्यापारादिरेव धात्वर्थ इति पक्षः। तथा च अपादानत्वाद्विवक्षायाम् अन्येन असिद्धकर्मत्वार्थम् अकथितञ्च इति सूत्रमावश्यकम्। प्रकृतसूत्राभावे अपादानत्वाद्विवक्षायाम् सम्बन्धषष्ठी स्यात् , तद्बाधनार्थं सूत्रमावश्यकम्।

फलव्याधिकरणव्यापारः तद्वाचकत्वं सकर्मकत्वम्।[७] फलव्याधिकरणत्वञ्चात्र फलनिष्ठाधेयतानिरुपिताधिकरणतावन्निरुपिताधेयताऽभाववत्वम्। पचादिधातुवाच्यं यत् फलं विक्लित्तिः तदधिकरणं तण्डुलादि तदनधिकरणं यत् देवदत्तादि तद्वृत्तिफूत्कारादिव्यापारवाचकत्वात् पचादिनां सकर्मकत्वम्। एवमेव फलसमानाधिकरण व्यापारवाचकत्वम् अकर्मकत्वम्।[८] यथा अस्त्यादिधातुवाच्यं यत् फलं सत्ता तदधिकरणं देवदत्तादि ,तदेवाधिकरणं च तदनुकूलात्मधारणानुकूलव्यापारस्येति तद्वाचकत्वात् अस्त्यादीनामकर्मकत्वमिति । सर्वस्याभिप्रायः यत् फलव्यापारयोरेकनिष्ठतायां धातुरकर्मकः तयोर्धर्मिभेदे तु सकर्मकः इति। तेन गमेः फलस्य कर्तुनिष्ठत्वेऽपि नैव तस्याकर्मकत्वं फलस्य कर्मस्थत्वेन च तयोः समानाश्रयत्वाभावात्।

पादटीप्पणि

१. श्लोकसिद्धान्तकौमुदी- श्लोक संख्या १२

२. परमलघुमञ्जूषा – जयशङ्करलाल त्रिपाठी-चौखम्बा सुरभारति प्रकाशन , वाराणसी-पृष्ठा संख्या - २३५

३. परमलघुमञ्जूषा – जयशङ्करलाल त्रिपाठी-चौखम्बा सुरभारति प्रकाशन , वाराणसी-पृष्ठा संख्या - २३७
४. परमलघुमञ्जूषा – जयशङ्करलाल त्रिपाठी-चौखम्बा सुरभारति प्रकाशन , वाराणसी-पृष्ठा संख्या - २३८
५. परमलघुमञ्जूषा – जयशङ्करलाल त्रिपाठी-चौखम्बा सुरभारति प्रकाशन , वाराणसी-पृष्ठा संख्या - २३८
६. परमलघुमञ्जूषा – जयशङ्करलाल त्रिपाठी-चौखम्बा सुरभारति प्रकाशन , वाराणसी-पृष्ठा संख्या - २३८
७. परमलघुमञ्जूषा – जयशङ्करलाल त्रिपाठी-चौखम्बा सुरभारति प्रकाशन , वाराणसी-पृष्ठा संख्या - २४७
८. परमलघुमञ्जूषा – जयशङ्करलाल त्रिपाठी-चौखम्बा सुरभारति प्रकाशन , वाराणसी-पृष्ठा संख्या - २४८

**पादटिप्पणी -**

१. श्लोक.सि.कौ- पृ १२
२. परलघुमञ्जूषा- पृ २३५
३. परलघुमञ्जूषा- पृ २३७
४. परलघुमञ्जूषा- पृ २३८
५. परलघुमञ्जूषा- पृ २३८
६. परलघुमञ्जूषा- पृ २३८
७. परलघुमञ्जूषा- पृ २४७
८. परलघुमञ्जूषा- पृ २४८

शोधछात्र: (नव्य-व्याकरणविभाग:)
केन्द्रीय संस्कृत विश्वविद्यालय:
श्री सदाशिवपरिसर: पुरी, ओडिशा

# अर्थवदधातुरप्रत्ययः प्रातिपदिकम्

**श्रीकृष्णमण्डलः**

**कौमुद्याम्** - धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा अर्थवदच्छब्दस्यस्वरूपं प्रातिपदिकसंज्ञं स्यात् ।

**काशिकायाम्** - अभिधेयवचनोऽर्थशब्दः। अर्थवच्छब्दरूपं प्रातिपदिकसंज्ञं भवति, धातुप्रत्ययौ वर्जयित्वा। डित्थः, कपित्थः कुण्डम्, पीठम्। अर्थवदिति किम् ? वनं धनमिति नान्तस्यवधेर्मा भूत्। नलोपो हि स्यात्। अधातुरिति किम् ? हन्तेर्लटिअहन् । नलोपः स्यात्। अप्रत्ययः इति किम् ? काण्डे, कुइये। ''ह्रस्वो नपुंसके प्रादिपदिकस्य'' इति ह्रस्व स्यात्। अनर्थकस्यापि निपातस्य प्रातिपदिकसंज्ञेष्यते-अध्यागच्छति, प्रलम्बते। प्रातिपदिकप्रदेशाः - ''ह्रस्वो नपुंसके प्रातिपदिकस्य'' इत्येवमादयः।

**मनोरमाशब्दरत्नयोः** - प्रत्ययं प्रत्ययान्तं चेति। सूत्रे तन्त्रादिनां उभयं विवक्षितमिति भावः। तथाहि प्रत्ययस्यैव पर्युदासे ''कुत्तद्धित'' इति सूत्रेण तद्धितान्तस्य संज्ञाविधानं व्यार्थ स्यात्। न च ''अस्यापत्यम् - इः'' इत्यादौ प्रत्ययत्वप्रयुक्तनिषेधबाधनेन तच्चरितार्थम्। 'अ अस् इ' इत्यस्थायां प्रवृत्तसंज्ञाया एकदेशविकृतन्यायेन सूलभत्वात्। न च ''कृत्तद्धितसूत्रे'' अपि तदन्तं न ग्राह्यमिति वाच्यम्, 'अर्थवत्' इत्यनुवृत्तिसामर्थ्यात्तदन्तग्रहणात्। अर्थवदित्यत्र प्रशंसाया हि मतुप्। एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वं च प्रशंसामूलम्। न चैतत्प्रत्ययमात्रस्य, तन्मात्रे एकार्थीभावाऽभावात्। एकार्थीभावत्वश्च पृथगार्थानां पदार्थानां समुदायनिष्ठैकशक्त्यैकोपस्थितिजनकत्वरूपम्। अयम् एकार्थीभावो यस्य प्रातिपदिकसंज्ञा चिकीर्षिता तन्मात्रवृत्तिरेव ग्राह्यः। तेन ''पञ्चनावप्रियः'' इति समासघटक पञ्चनाव इत्यस्य तद्धितान्तत्वसमासत्वयोरपि न प्रातिपदिकत्वम्। प्रियशब्दान्त एवात्रैकार्थीभावो न तु तन्मात्र इति। न ''अर्थवदित्यस्य पूर्वसूत्रे चरितार्थता। धातुप्रत्ययप्रर्युदासेनैव तल्लाभावत्। तस्मात् प्रत्ययान्तं च वर्जयित्वेत्युचितमेव। यदि तु प्रत्ययो न प्रर्युदस्येन तर्हि '' सात्पदाद्योः'' इति सूत्रे सातिग्रहणं व्यर्थ स्यात्।

'अर्थवत् इति किम्? धनं, वनमित्यादौ प्रतिवर्णं संज्ञा मा भूत्। तस्यां च सत्यां स्वादयः स्युः। ननु संख्याकर्मादिरभावात् न भविष्यन्तीति चेत् ? न, एकवचनमुत्सर्गतः करिष्यते इति सिद्धान्तात्। हुंफडादिभ्य इव सोर्दुर्वारत्वात्। न चार्थवद्ग्रहणपरिभाषयाऽनर्थके न स्यादिति वाच्यम्, तस्या विशिष्टरूपोपादानविषयत्वात्। 'अधातु' - पर्युदासो नार्थवत्त्वं गमयति, अनर्थकयोरपि धातुप्रत्यययोर्दर्शनात् अधीते, यावक इति। अधिपूर्वस्यैवेडः प्रयोगात् विशिष्ट एवार्थवान्, न तु केवलः। 'इह अध्ययने' इत्याद्यर्थनिर्देशस्तु अवयवे समुदायार्थारोपात्। एवं कन्नप्यनर्थकः । यावशब्दादपि तदर्थप्रतीतेः। ''ओषधेश्च विभक्तावप्रथमायाम्'' ''अकर्तरि च कारके'' इति विभक्तिकारकग्रहणाभ्या नञिवयुक्तन्यायस्यानित्यत्वकल्पनाच्चेति।

अत्रेदं वक्तव्यम् - धातुरनर्थक इति तावद्व्याहतम्, क्रियावाचकत्वं विना धातुत्वायोगात्। आरोपितं तदिति चेत् ? सत्यम्, तावतैवेष्टसिद्धेः। प्रकृतिप्रत्ययविभागस्तत्तदर्थविभागश्च सर्वःकल्पित एव। परमार्थतस्तु स्फोट एवार्थवानिति सिद्धान्तात्। उक्तञ्च हरिणा -

**उपायाः शिक्षमाणानां बालानामुपलालानाः।**

**असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ।।**

कथमन्यथा इङो द्विवचनमडादयश्च स्युः। तथा च प्रत्याहाराह्निके अर्थवन्तो वर्णा इति प्रघट्टके अध्येति, अधीत इत्यत्रैकारोऽर्थवानिति भाष्ये स्पष्टमेवोक्तम्।

एवं कन्प्रत्ययोऽप्यर्थवानेव, स्वार्थिकानां प्रकृत्यर्थेनैवार्थवत्त्वात्। कल्पनामात्रमिदमिति चेत् न्। उक्तत्वात्। नैषा कल्पना शास्त्रकृत्संमतेति चेन्न, ''द्वितीयतृतीयचतुर्थतुर्याणि'' इति सूत्रे पूरणात्स्वार्थे अन्प्रत्ययस्य पूरणार्थताया भाष्यकारैरेवक्तत्वात्। प्रत्यय इति महासंज्ञां कुर्वतः सूत्रकृतोऽपि संमतमेवेदम्।

यदपि - ''ओषधेश्च'' इत्यादि । तदपि न । अनित्यत्वे अपि औत्सर्गिकप्रवृत्त्या इष्टसिद्धेः। इष्टस्थले अपि अप्रवृत्तौ न्यायस्य निर्विषयत्वापाताच्च। अनित्यत्वज्ञापनस्य कथञ्चिदावश्यकत्वेऽर्थवद्ग्रहणस्यैव ज्ञापकत्वसम्भवाच्च। उत्तरार्थस्यापि ''इह किञ्चित् त्रपो'' इति न्यायेन। इह करणस्य सफलत्वौचित्यात्। ''ओषधेश्च'' इत्यादौ विभक्तिकारकग्रहणयोः एवेत्थं सति प्रत्याख्यानसम्भवाच्चेति दिक्।

''अधातु'' रिति किम् ? - हन्धातोर्लङि अहन् इत्यत्र नलोपो मा भूत्। न च कार्यकालपक्षे प्रत्ययान्तत्वेन पर्युदासोऽस्त्विति वाच्यम्। प्रत्ययलक्षणेनोक्तपर्युदासाप्रवृत्तेः ''न ङिसम्बुद्ध्यो''रिति निषेधेन ज्ञापितत्वात्। कथमन्यथा राजेत्यादौ नलोपः स्यात्। ''अप्रत्ययः'' किम् ? - हरिषु, करोषि। अत्र सुप्सुपोर्मा भूत्। अप्रत्ययान्तः किम् - तत्रैव विभक्तिविशिष्टर्मा भूत्। न चान्तवद्भावेन काण्डे, सोरुत्पत्तिश्च स्यादिति वाच्यम्। कार्यकालपक्षेणेष्टसिद्धेः (प्रत्ययान्तपर्युदासेन) ।

यथोद्देशेऽनान्तादिवत्, ''सप्तम्यधिकरणे च'' इत्यादिनिर्देशात्। ''ह्रस्वो नपुंसके'' इति सूत्रे प्रातिपदिकग्रहणं वा उक्तार्थे सामान्यापेक्षं ज्ञापकमस्तु। अन्यथा ह्रस्व एव न स्यात्।

यस्तु वदन्ति-प्रत्ययप्रर्युदासो न कर्त्तव्यः, प्रत्ययान्तपर्युदासेनैव गतार्थत्वात्, व्यपदेशिवद्भावेन तस्यापि प्रत्ययान्तत्वादिति। तन्न। प्रत्ययग्रहणे यस्मात् स विहितस्तदातैः ग्रहणात्, केवलस्य च अतथात्वात्। अन्यथा सुप्तिङोरपि तदन्तत्वात् पदत्वं स्यात्। तथा च हरिषु, करोषि इत्यादौ षत्वं न स्यात् 'सात्पदाद्यो' रिति निषेधात्।

अधातुप्रत्ययाविति सिद्धे नञ्द्वयोपादानां स्पष्टार्थम्। महासंज्ञाकरणं श्रुत्यनुरोधात्। तथा चाथर्वणे पाठ्यते- ''को धातु ? किं प्रातिपदिकम् ? कः प्रत्ययः ?'' इति।

डित्थादिन्यव्युत्पन्नानि उदाहरणम्। अव्युत्पत्तिपक्षस्य चेदमेव ज्ञापकमिति प्राञ्चः। यत्तु व्युत्पत्तिपक्षे अपि बहुपटव इत्याद्यर्थं सूत्रम्। न चैवं बहुच्पूर्वः इत्येव सूत्र्यतामिति वाच्यम्। 'मूलकेनोपदंशम्' इत्यादौ कृदन्तत्वेनातिप्रसङ्गात्। न च समासग्रहणं नियमार्थमिति निस्तारः, अर्थत्सूत्रारम्भं विना समासग्रहणस्य नियमार्थत्वायोगादिति दिक् ।

**शब्दकौस्तुभे** - अव्युत्पत्तिपक्षस्येदमेव ज्ञापकम्। डित्थादीन्यव्युत्पन्नान्युदाहरणम्। यत्तु व्युत्पत्तिपक्षे अपि निपातार्थमनुकरणार्थञ्चेदमिति हरदत्तनोक्तम्, तन्न। तत्राऽपि प्रकृत्यादिकल्पनसम्भवदिति बोध्यम्। वस्तुतस्तु ''बहुपटवः'' इत्याद्यर्थमिदम्। न च तद्धितग्रहणे मत्त्वर्थलक्षणया निर्वाहः। 'पचतकि' इत्यादावतिव्याप्तेः। अव्युत्पत्तिपक्षस्तु कमिग्रहणेन सिद्धे कंसग्रहणेनैव ज्ञाप्यः। ज्ञापिते च तत्राप्यनेनैव संज्ञा सिद्ध्यति। प्रातिपदिकमिति महासंज्ञाकरणं प्राचामनुरोधात्।

**लघुशब्देन्दशेखरे** - स्वादिविधौ प्रातिपदिकाधिकारात्तां संज्ञामाह-अर्थवदिति। अधातुरित्यादिः प्रर्युदासो लाघवात्

(प्रसज्यप्रतिषेधे हि असमर्थसमासकल्पना, वाक्यभेदः, क्रियाध्याहारश्च कर्तव्यो भवतीति गौरवम्। आरोपितो धातुरित्यादिर्वाच्योऽर्थः। धातुभिन्नमित्यादौ तु फलितार्थः। अतो न पुंस्त्वानुपपत्तिः।)

प्रत्ययान्तमिति। बोद्धबोधार्थमवर्तिते प्रत्यपदे प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम्। ''संज्ञाविधा'' विति निषेधस्तु- प्रत्ययस्य यत्र संज्ञा तद्विषय इति भावः। ''इति भाव'' इति सूचितां प्रत्ययपर्युदासवैफल्यरूपामरुचिं कथमितुमाह - अत्र सूत्रे उत्तरसूत्रे चार्थवत्त्वम् - ''एतत्संज्ञाफलभूतविभक्तीतरसमभिव्याहारनपेक्षया लोकेऽर्थविषयकबोधजनकत्वम् इति।''

शोधछात्रः (नव्य-व्याकरणविभागः)
राष्ट्रियसंस्कृतसंस्थानम्, श्रीसदाशिवपरिसरः, पुरी

# हलोऽनन्तरा: संयोग।

**सुलग्नालेङ्का**

संयोगसंज्ञाविधायकं सूत्रमिदम्

पदच्छेद: - हल:, अनन्तरा:, संयोग:।

**अर्थ : -** अज्भिरव्यवहिता हल: संयोगसंज्ञा: स्यु:।

अत्र न अन्तर: अनन्तर:, अन्तर: नाम व्यवधानम्। अनन्तरा: नाम नास्ति अन्तरा व्यवधानं येषामित्यर्थकस्य अनन्तरशब्दस्य व्यवधानरूपार्थस्य ग्रहणम् ।

**विषयसंन्दर्भविन्दव:**

१. हल्समुदायस्य संयोगसंज्ञा ।

२. वर्णद्वयोर्न संयोगसंज्ञा ।

३. सौत्रत्वात् हल: वहुवचनम्।

४. द्वयोर्सयोगसंज्ञाया: व्यावृत्रि:।

**१. हल्समुदायस्य संयोगसंज्ञा :-**

अत्र हलसमुदायस्य राव संयोगसंज्ञा भवति, न तु प्रत्येकस्य हल: संयोगसंज्ञा। यथा - अत्र एक: न्याय: विद्यते यथा - ''गर्गा: शतं दण्डताम्।'' अत्र एकैकस्य गर्गस्य शतेन रूप्यकै: दण्ड: न विधीयते, किन्तु गर्गाणां शतं दण्ड्यते। अत्र अपर: कश्चित् न्याय: विद्यते - सर्वे ब्राह्मणा: भोज्यन्ताम्, माठरकौण्डिन्यौ परिवेविषाताम् इति। ब्राह्मणा: भोजनकर्तृत्वेन माठरकौण्डिन्यौ च परिवेषणकर्तृत्वेन अनेन न्यायेन अभिमता:। भोजनक्रिया प्रत्येकस्मिन् भोजनकर्तीरि ब्राह्मणे विश्राम्यति, न तु ब्राह्मणसमुदाये यथा, तथा चेत् अत्र संयोगसंज्ञा अवयवस्य प्राप्नोति न हलसमुदायस्य। अभावपि न्यायौ शास्त्रे आश्रितौ। तथा च कतरेण व्यवस्थेति विनिगमकान्तरमाह - अनन्तरा इति। नास्ति अन्तरा व्यवधानं येषामित्यर्थकस्य अनन्तरशब्दस्य व्यवधानशून्यार्थकत्वं प्रतीयते। व्यवधानञ्च द्वयोर्मध्ये केनापि न्यायेन भवति। नहि एकस्य केनापि व्यवधानं दृष्टम्। एवञ्च संयोगे विप्रयोगश्च साहचर्य विरोधिता इत्यादि अभियुक्त उक्तदिशा विप्रयोगस्यापि संयोगवद् अर्थविशेषनिश्चायकत्वेन व्यवधानरहित्ये विवक्षते व्यवधानयोग्यताया: सत्त्वमपि अपेक्षितम्। तथा च द्वयोरेव व्यवधानयोग्यताया: सम्भवेन द्वयोरेव संयोगसंज्ञा, न प्रत्येकम् इति आशय:।

ननु हल: प्रत्येकं संयोगसंज्ञा अनन्तराश्च संयोगसंशका: स्यु: इति अर्थे प्रत्येकं संयोगसंशाया आपत्तिस्तदवस्था अत आह - तस्येति। अनन्तरा इति हलो विशेषणम्, न तु स्वातन्त्रेण संज्ञाया उद्देश्यम्। अथवा अयमर्थ: - अविद्यामानं सद्, इतरव्यावर्तकम् उपलक्षणमुच्यते। 'काकवन्तो देवदत्तस्य गृहा:' इत्यत्र काक उपलक्षणम्। अविद्यामानोऽपि काक: तद् गृहं गृहान्तराद् व्यावर्तयति। तथा प्रकृतेऽपि आनन्तर्यमुपलक्षणम्। तथाच क्वचित् वर्णद्वयस्थले आनन्तर्यस्य सम्भवेन इह एकस्मिन् तत् वर्णे आनन्तर्ययोग्यतारूप आनन्तर्यस्य अभावेऽपि संयोगसंशायाम् उपलक्षितस्य आनन्तर्यस्य निमित्तत्वेन सम्प्रति तत् अभावेऽपि सा संज्ञा प्राप्नोति। तत् वारणाय आह - तस्य विशेषणतया इति। आनन्तर्यं विशेषणमेव, न तु उपलक्षणम् इति न दोष: ।

## २. वर्णद्वयोर्न संयोगसंज्ञा :-

अपरेषां वैयाकरणानां मतं खण्डयितुं शेखरकार: 'यत्तु' इत्यादि वाक्यानि समुपस्थापयति, यथा- संयुज्यते वर्णा यत्र ........ अत्र अयमाशय: यत् व्युत्पत्तिवलात् गृह्यमान अर्थेन प्रत्येकस्य वर्णस्य संयोगसंज्ञा असम्भवा, तस्मात् वर्णद्वयस्य संयोगसंज्ञा कर्त्तव्या इति मतं समुचितम् ।

यथा घटपदौ संयुज्येते इति स्थले संयुज्यमानघटपटयो: अर्थ अतिरिक्तस्य अन्य पदार्थस्य प्रतीयमानतया भिन्न: प्रासादादिर्वोध्यते, तथैव अत्रापि संयोगसंज्ञायां तद् वर्णघटितस्य तदतिरिक्तस्य वाक्यात्मकसमुदायस्य ग्रहणेन हलसमुदायस्य संज्ञा न स्यात्। यत्तु आचारिणो मूलविरुद्धार्थ प्रतिपादन एकव्रतिन: व्रीह्य: संयुज्यन्ते यत्र राशौ ईदृशप्रयोगदर्शनात् संयुज्यमानातिरिक्तोऽन्यपदार्थ इति नियमो व्यभिचरित: इत्याहु:। तन्न। 'धान्यानां राशि:' एवं विधप्रयोगस्य दर्शनेन अभिन्नेऽपि भेद: आरोपित:। पुरुषा एव सेना, वृक्षा एव वनम्, परं तत्र भेदेन व्यवहार: आरोपेण एव उपपाद्यते यथा, तथा अत्रापि अरोपितभेदेन तत् द्वयव्यवहारोपपत्तौ अन्यपदार्थ: अन्य एव भवतीति नियमो न क्वचिदपि व्यभिचरति, भेदो वास्तविक एव इति न विवक्षित:।

३. सौत्रत्वात् 'हल:' वहुवचनम् :-

द्वयोर्हलो: संयोगसंज्ञापक्षे हल: - इत्यत्र भूतत्वात् वहुवचनम्। 'जात्याख्यायाम्' इति सूत्रेण जातौ बहुवचनं कल्प्यताम् इति न वाच्यम्; आनन्तर्यविशेषणस्य जातौ असम्भवात्। जातौ संज्ञाया: फलाभावात् अवतरन्ती संज्ञा प्रति हल् व्यक्तिविश्राम्येद्, एवं लाघवात् जातौ एकवचननिर्देशस्य औचित्य अच्चेत्यादि दोषवाहुल्यात् सौत्रत्वात् एकवचन इति एव युक्तम्। तथा च अनेकार्थकं वहुवचनम्, न तु वहुत्व अर्थमिति अर्थ:। अथवा हलौ च हलश्च इत्यावम् एकशेषकरणे न हल इत्यत्र वहुवचनस्य उपपत्रि:। तथा च हल्द्वयस्य अनेकेषां हलाञ्च संयोगसंज्ञाया: प्राप्ति:। प्राचीनमतेन इदं सम्भवति; स्वमते तु 'बहुनां संयोगसंज्ञा नेष्यते' इति अग्रे वक्षमाणत्वात्। द्वयो: हलो: संयोगसंज्ञा द्विविधेऽपि सूत्रव्याख्याने सिध्यति।

परस्मिन् संयोगे सति पूर्वस्य इकारस्य 'संयोगे गुरुं' इत्यनेन गुरुसंज्ञायां शिक्ष् धातो गुरुमत्वं सिद्धयति। बहूनामेव संयोगसंज्ञापक्षे संयोगसंज्ञा न स्यात्।

यत्रापि□बहूनां हलाम् अव्यवधानेन सन्निधानं तत्रापि द्वयो: द्वयो: वर्णयो: एव संयोगसंज्ञा, न बहूनां हलाम्। 'स्को: संयोगाद्योरन्ते च' इति सूत्रेण झलि परे य: संयोग: तदाद्यो: सकार-ककारयो: लोपो विहित:। स च न सम्भवति। हल् सहितस्य अन्त्यहल्वर्णद्वयस्य संयोगसंज्ञायां संयोगे न झल् पर: स्यात्। सर्वत्र एव हि झल्सहितस्य संज्ञाया: प्राप्तत्वात्। अत: सूत्रवैयर्थ्यभिया बहूनां संज्ञा नेति युक्तम्। द्वयोर्द्वयो: संयोगसंज्ञायान्तु तृतीयस्य हलो झल्रूपत्वे सूत्रस्य चरितार्थ्यात्।

सौत्रत्वात् 'हल्' वहुवचनम् - इति सन्दर्भस्य अयमाशय: यत् प्राचीनवैयाकरणानां मते हल् (व्यञ्जन) द्वयस्य, हल् समुदायस्य च संयोगसंज्ञा भवति, परन्तु शेखरग्रन्थानुसारं द्वयो: हल: नाम हल् (व्यञ्जन) द्वयस्य केवलं संयोगसंज्ञा, अत्र प्रमाणं भवति -

'गुरोश्च हल:' (३-३-१०३) सूत्रम्। अस्य अर्थ: य: धातु: हलन्त: तथा गुरुमान् (गुरुवर्णयुक्त:) तादृशधातो: स्त्रीलिङ्गे अ-प्रत्यय: भवति। उदाहरणं यथा - शिक्षा - अत्र 'शिक्ष्' धातु: प्रथमत: हलन्त: (क्ष्) तथा गुरुमान्(शि) इति। अत्र प्रश्न: भवति गुरुनाम दीर्घवर्ण:, किन्तु 'शि' इत्यत्र ह्रस्व इ का:, अयमिकार: कथं गुरु: (दीर्घवर्ण:)

भवति ? अत्र उत्तरं यथा - 'संयोगे गुरुः' सूत्रेण यदि संयोगवर्णः परे विद्यते तर्हि पूर्वस्थ ह्रस्ववर्णः गुरुवर्णः भवति, तस्मात् 'शिक्ष्' धातुस्थितः, 'शि' इत्यत्र ह्रस्व इकारः परे क्ष् (क् + ष्) इति 'संयोगे गुरुः' (१-४-११) सूत्रेण गुरुः (दीर्घवर्णः) रूपेक्ष गृहीतः भवति। तस्मात् 'शि' इति गुरुमान् (दीर्घवर्णयुक्तः), अतः शिक्ष् परे अ प्रत्ययः भवति। शिक्ष् + अ इत्यवस्थायाम् 'अजाद्यतष्टाप्' अनेन सूत्रेण टाप् (आ) प्रत्यये शिक्ष् + अ + आ = शिक्षा इति पदं सिद्ध्यति ।

४. द्वयोस्स्यंयोगसंज्ञायाः व्यावृत्तिः न युक्ताः :-

अर्थात् वहूनां संयोगसंज्ञायाः फलं द्वयोः संयोगसंज्ञायाः व्यावृतिरिति न युक्तम्। अत्र उच्यते वहूनां हलां, हल् द्वयस्य अपि संयोगसंज्ञा भवति। अत्र शेखरकारः कथयतिआनन्तर्यं व्यवधानाभावः, व्यवधानं च विजातीयेन एव इत्याशयेन आह - अज्भिरिति। अत्र अयं भावः अनेक वर्णानाम् अव्यवधाने च हल् द्वयस्य अपि संयोगसंज्ञा भवति। हल् समुदायस्य संयोगसंज्ञा न इति, अन्यथा 'स्कोः संयोगाद्योः' अनेन विहित संयोगादि लोपस्य विधानं, झल् च संयोगान्तर्गतत्वात् झल् परकस्य संयोगस्य अभावात्, व्यर्थं भविष्यति। तथा च तत् तत् स्थलेषु हल् समुदायस्य संयोगसंशाकरणे किमपि फलं नास्ति। अत्र उच्यते - व्यवधानं च विजातीयेन एव इत्याशयेन आह- अज्भिरिति। इति सन्दर्भस्य अयं भावः - अच् इत्यत्र पदान्त च कारस्य 'चोः कुः' सूत्रेण कुत्वे जाते अग्भिः एतत् पठितव्यम् ।

उपसंहारः :-

'हलोऽनन्तराः संयोगः' इति सूत्रे द्वयोः वहुनां च संयोगसंशा भवतीति निर्यासः। तत्र अनन्तरा इत्यत्र अन्तरं नाम छिद्र - विवरं - वर्णशून्यकालः इति वुध्वते। संयोगः इत्युक्ते संयुज्यन्ते वर्णाः यत्र इति व्युत्पत्ति बलात् द्वयोः संयोग संज्ञालाभम् शिक्षा इत्युदाहरणं संगच्छते। इन्द्रः, राष्ट्रम् इति। हलः इति सौत्रत्वात् वहुवचनम्, अर्थात् हलौ च हलश्च इति हलः। अत्र द्विवचनं वहुवचनान्तानाम् एकशेषात् हलः इति वहुवचनं युक्तम्।

आचार्यप्रथमवर्षम्, नव्यव्याकरणविभागः
(सर्वदर्शनविभागः)

# नव्यव्याकरणविभागीयोपलब्धय:

सेप्टेम्बरमासस्य पञ्चमदिनाङ्के परिसरे विभागीयच्छात्रै: गुरुदिवसकार्यक्रम: तथा विभागं प्रत्यागतानां नवीनानां छात्राणामभिनन्दनकार्यक्रमश्च समायोजित:। कार्यक्रमेऽस्मिन् आचार्यसर्वपल्लीराधाकृष्णन्महोदयस्य विविधं प्रतिभं गुरुणां कर्त्तव्यं छात्राणामनुशासनपरम्परा च विभागस्याचार्यैश्छात्रैश्च विचारितम्।

संस्कृतस्यरक्षायै प्रतिक्षणं संस्कृतमुच्चरयन् श्रीगान्धारकुलकर्णिनामधेयेन महाराष्ट्रदेशस्य संस्कृतविदुषा इन्धनविहीनद्विचक्रिकया अभारतं परिक्रम्य ०७.०१.२०१९ दिनाङ्के पवित्रे श्रीक्षेत्रधाम्नि श्रीसदाशिवपरिसरे उपगतम्। तेषां महोदयानां स्वागतं अस्माकं विभाग: तदानीन्तनभारप्राप्तप्राचार्यादिभि: सह मिलित्वा सोल्लासेनायिजितवन्त:। एतस्मिन्नवसरे सभअकायोजिता। संस्कृतस्य सुरक्षायै के के उपाया: कर्त्तव्या:, तत्रापि संस्कृतजिज्ञासूनां दायित्वं किम् एतत्सर्वं पुङ्खानुपुङ्खतया सर्वै: तर्चितम्।

गते १६.०२.२०१९ त: १७.०२.२०१९ दिनाङ्कं यावत् विभागपक्षत: दिनद्वयात्मकं शैक्षिकपरिभ्रमणं समनुष्ठितम्। परिभ्रमणेऽस्मिन् विभागस्य सर्वे आचार्या: छात्राश्च मिलित्वा ओडिशाराज्यस्य केन्दुझरजिलाया: प्रसिद्धं शक्तिपीठं श्रीघटगाँतारिणीमन्दिरं तत्रत्यस्थं सूरम्यं सानघाघराजलप्रपातं अपि च याजपुरजिलाया: प्रसिद्धं महाविनायकमन्दिरं च दृष्टवन्त:।

आन्ध्रप्रदेशस्य ए.वाई.एस्.संस्कृत-ओरिओण्टाल-डिग्रीमहाविद्यालयस्य प्राचार्यचरा: डॉ.एस्.टि.के रङ्गाचार्युलुमहोदया: व्याकरणं सर्वशास्त्रोपकारकम् इति विषयमधिकृत्य २५.०२.२०१९ दिनाङ्के विशिष्टं व्याख्यानं प्रादु:।

गते २५.०२.२०१९त: २६.०२.२०१९ दिनाङ्कपर्यन्तं संस्थानस्यानुमोदनेन कतिपयसंज्ञासूत्रविमर्श: इत्यमुं विषयमाश्रित्य दिनद्वयात्मिका राष्ट्रियसंङ्गोष्ठी समायोजि।

उद्घाटनोत्सवे सङ्गोष्ठीसमुद्घाटकत्वेन परिसरप्राचार्या: प्रो.हरेकृष्णमहापात्रमहाभागा:, मुख्यातिथिरूपेण श्रीजगन्नाथसंस्कृतविश्वविद्यालयस्य कुलपतिचरा: प्रो.किशोरचन्द्रपाढिमहोदया:, पुरीनगरस्थस्य सर्वकारीयमहिलामहाविद्यालयस्य प्राचार्या: डॉ. सीमाञ्चलपण्डामहोदया: मुख्यावक्तृरूपेण विभागमुख्या: प्रो.के.वी सोमयाजुलुमहोदया: समुपस्थिताश्च आसन्। कार्यक्रमस्य प्रारम्भे विभागस्य वरिष्ठाश्छात्रा: वैदिकमङ्गलाचरणं चक्रु:। तत: विभागमुख्यै: प्रो. के.वि. सोमयाजुलुमहोदयै: आगतानामतिथीनां वाचिकं स्वागतं विहितम्। विभागस्य वरिष्ठा: आचार्या: डॉ.दुर्गाचरणषडङ्गिमहानुभावा: सङ्गोष्ठ्या: अवतरणं प्राप्तुवन्। डाँ. उमेशचन्द्रमिश्रमहोदयानां निदेशकत्वेन डॉ.अजयकुमारदाशमहोदयानां संयोजकत्वेन, प्रो.अनुपमापृष्टिमहोदयानां तत्त्वावधानेन तथा श्रीअजयानन्दसाहुमहोदयानां सञ्चालनेन च सङ्गोष्ठी पूर्णतां प्राप्तोत्। कार्यक्रमेऽस्मिन् बहुदूरात् राज्यात् राज्यान्तराच्च नैके विद्वांस: समुपागत्य संज्ञासूत्राणि विमर्शं विविधान् शोधप्रबन्धानुपस्थापितवन्त:।

समापनसत्रे परिसरप्राचार्याणां प्रो.हरेकृष्णमहापात्रमहाभागानां सभाध्यक्ष्यरूपेण, श्रीजगन्नाथसंस्कृतविश्वविद्यालयस्य स्नातकोत्तरव्याकरणविभागस्य आचार्याणां प्रो. हरिहरहोतृमहोदयानां मुख्यातिथिरूपेण, विभागस्य मुख्यानां प्रो. के.वी. सोमयाजुलुमहाभागनां स्वागतेन विभागस्यान्यतमाचार्याणां डॉ. दुर्गाचरणषडङ्गिनां सङ्गोष्ठीसारकथनेन, विभागस्य

सहायकाचार्याणां डॉ उमेशचन्द्रमिश्रमहाभागानां सञ्चालनेन तथा विभागीयकनिष्ठाचार्याणां डॉ.अजयकुमारदाशमहोदयानां धन्यवादप्रदानेन च संज्ञासूत्रविमर्शः इति सङ्गोष्ठी सफलतामगात्। विभागीयाचार्याणां प्रो. अनुपमापृष्टिमहोदयानां तथा श्रीअजयानन्दसाहुमहोदयानां तत्वावधानेन च सर्वं कार्यं सम्पन्नमभवत्।

ऐषमो विभागे शोधकर्तृ एतेषु छात्रेषु डॉ.दुर्गाचरणषडङ्गिमहोदयानां तत्त्वावधानेन शोधकार्यं कुर्वाणा शुभलक्ष्मीमहान्तिः विद्यावारियुपाधिं लब्धवती। तथा च शोधकार्यं कुर्वाणः विभागस्य कनिष्ठाध्यापकेन श्रीअजयानन्दसाहुमहोदयेनापि विद्यावाध्युपाधिः अधिगतः।